# पाणिनीयप्रदीपः ।

## द्वितीयो भागः ।



—रामलग्नत्रिपाठी

# THE
# PANINEEYA PRADEEPA.

## PART II

By

PANDIT RAMA LAGNA TRIPATHI.

Second Edition

Published by

MASTER KHELARI LAL AND SONS.,

*Proprietors of the 'Sanskrit Book Depot'*

Kachauri gali, Benares City.

1933

Price 10 Annas.

॥ श्री ॥

॥ पाणिनीये नमः ॥

# पाणिनीय-प्रदीपः

## द्वितीयो भागः

गोरक्षपुरमण्डलान्तर्गतब्रह्मपुरग्रामनिवासिना प्रतापगढ़स्थ
बी० एन० मेहता संस्कृत विद्यालयस्य
व्याकरणाध्यापकेन
पं० श्रीरामलग्नत्रिपाठिना
निर्मितः

तेनैव संशोधितः

( द्वितीयं संस्करणम् )

स च
मास्टर खेलाड़ीलाल ऐण्ड सन्स्
महोदयैः
काश्यां 'ज्योतिष प्रकाश' नाम्नि यन्त्रालये
मुद्रापयित्वा प्रकाशितः



मूल्यं १० आणकाः

# निवेदनम् ।

वैदिकलौकिकसमस्तदुरूहशब्दसन्दोहव्युत्पादकं महर्षिपुङ्गवेन तत्रभवता श्रीमता पाणिनिना व्याकरणशास्त्रं विरचितं यल्लोके पाणिनीयव्याकरणमिति नाम्ना प्रसिद्धिमुपगतम् । यद्यप्यस्य सन्ति भूयस्यो व्याख्याः प्रचलिताः, वयं न ता झटिति तत्त्वावगमे शक्ताः व्यक्तार्थाश्चेत्यतिरोहितं विपश्चितां सूक्ष्ममतीनाम्, एतदर्थमेव शीघ्र-बोधकृते सुकुमारमतीनाम्, आलस्यानासादितदुरवबोधशेखरादि-ग्रन्थानां महाधियामपि नातिमहान् पाणिनीय-प्रदीपोऽयं ग्रन्थश्च-तुर्भागात्मको मया महता परिश्रमेणातीवमनोहरो निरमायि, यत्र सिद्धान्तकौमुद्यादिग्रन्थगतसकलगूढविषयोपरि प्राचीननवीनमताविरुद्धप्रायाः सुबोधाः सुविचार्य व्याख्या विहिताः । प्रदीप इवायं पाणिनीयव्याकरणसम्बन्ध्यज्ञानान्धतमसानां विभेदाय कल्पत इति वर्ष-त्रयाभ्यन्तर एव एतत्प्रथमभागप्रतीनां सहस्रद्वयविक्रयेणैव प्रतीयते । अस्य प्रथमभागवत् यदीमं द्वितीयभागमपि तेनैवादरेण ग्रहीष्यन्ति कृपालवो भवन्तो विद्वांसस्तदास्य तृतीयचतुर्थखंडावपि भवतां सविधे तेनैवोत्साहेनोपहरिष्यामः । दृष्टिदोषाद्भ्रमाद्वा यत्किञ्चिदत्र दूषणं भवेत् चेत् संशोधनीयं तत् क्षमापरैर्भवद्भिर्विद्वद्वरैरिति निवेदयति ।

| | |
|---|---|
| रामनवमी १९९० <br> बी० एन्० मेहता सं० विद्यालयः <br> प्रतापगढ़ ( अवध ) | रामलग्न त्रिपाठी । |

# पाणिनीयप्रदीपद्वितीयभागस्थविषयानुक्रमणिका ।



॥ श्रीः ॥

ॐ नमः शिवाय ।

# पाणिनीयप्रदीपः ।



अनायासेन यद्भक्ताः पुरुषार्थचतुष्टयम् ।
लभन्ते तं शिवं देवं ग्रन्थादौ शिरसा नुमः ॥

## मुनित्रयमिति ।

येन विना यदनुपपन्नं तेन तस्याक्षेपः, यथा पीनो देवदत्तो दिवा न भुङ्क्ते, इत्यत्र भोजनं विना पीनत्वानुपपत्त्या रात्रिभोजनस्याक्षेपः तथै-वात्रापि विरच्यत इति क्रियया 'मया भट्टोजिदीक्षितेन' इति कर्तुरा-क्षेपः। "भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी" इति ग्रन्थान्ते माङ्गलिकश्लोकप्रामाण्येनास्य ग्रन्थस्य भट्टोजिदीक्षित एव कर्त्तेत्या-शयात्। अतएव विरच्यत इति क्रियया अन्येषां देवदत्तादीनां कर्तृणा-माक्षेपो न भवति। तथा च मया भट्टोजिदीक्षितेन, इयम्=मद्बुद्धि-स्था, वैयाकरणसिद्धान्तकौमुदी विरच्यते=विविधगुणविशिष्टा क्रियते। किं कृत्वा मुनित्रयं नमस्कृत्य, मन्तारो वेदशास्त्रतत्त्वावग-न्तारो मुनयः, त्रयोऽवयवा यस्य तत् त्रयम् मुनीनाम्=पाणिनि-कात्यायनिपतञ्जलीनां त्रयं मुनित्रयम्। अत्र 'उपपदविभक्तेः कारक-विभक्तिर्बलीयसी' इति न्यायात् द्वितीया विभक्तिः। अतः "नमः स्वस्ति........" इत्यनेन नमःशब्दयोगे चतुर्थी न भवति। पदमुद्दि-श्य विधीयमाना विभक्तिः उपपदविभक्तिः। क्रियाजंनकार्थक-विभक्तिः कारकविभक्तिः॥ पुनः किं कृत्वा तदुक्तीः परिभाव्य, यदा तच्छब्दः पूर्वपरामर्शकः तदा तच्छब्देन मुनित्रयस्याक्षेपः तस्य मुनि-त्रयस्योक्तयः तदुक्तयः ताः तदुक्तीः परिभाव्य=विचार्य्येत्यर्थः। यदा तच्छब्दः बुद्धिस्थपरामर्शकः तदा तच्छब्देन प्राचीनानामाक्षेपः।

तेषा प्राचीनानामुक्तयः तदुक्तयः ताः तदुक्तीः परिभाव्य=तिरस्कृत्येत्यर्थः । नन्वनादरः परिभवः परीभावस्तिरस्क्रियेति कोषप्रामाण्येन परिपूर्वकभूधातोः तिरस्कारार्थत्वेन परिभाव्येत्यस्य विचार्य्येत्यर्थो न युक्त इति चेन्न "परौ भुवोऽवज्ञाने" इत्यत्रावज्ञानग्रहणसामर्थ्यात् धातूनामनेकार्थत्वमतः परि समभिव्याहारे भूधातोरवज्ञानातिरिक्तविचारार्थस्वीकारे बाधकाभावात् । एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता, प्रामाणिकत्वञ्च ध्वनितम् ॥

व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्, व्याकरणमधीयते, विदन्ति वा वैयाकरणाः, सिद्धो निष्पन्नोऽन्तो निर्णयो येषान्ते सिद्धान्ताः यद्वा वादिप्रतिवादिभ्यां निर्णीतार्थाः सिद्धान्ताः, वैयाकरणानां सिद्धान्ताः वैयाकरणसिद्धान्ताः । मोदनं मुद् सम्पदादित्वात् भावे क्विप्, कौ=पृथिव्यां मुदानन्दो यस्मादसौ कुमुद्=चन्द्रः तस्य कुमुदः=चन्द्रस्येयमिति विग्रहे तस्येदमित्यणि, टिड्ढेति ङीपि कौमुदी=चन्द्रिका, कौमुदीव कौमुदी, वैयाकरणसिद्धान्तानां कौमुदी, वैयाकरणसिद्धान्तकौमुदी । इयम् वैयाकरणसिद्धान्तकौमुदी=सिद्धान्तभूतसकलार्थप्रकाशजनिकेत्यर्थः । सिद्धान्तार्थप्रकाशकत्वेन, अतिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसंतापस्य निवारकत्वेन च ग्रन्थरूपाया अस्याः कौमुद्याः चन्द्रिकया सह सादृश्यमस्ति । करिष्यमाणाया अपि कौमुद्याः बुद्धया सन्निधापितत्वेन 'इयम्' इत्यङ्गुल्या निर्देशः कृतः भाविनोऽपि वस्तुनो बुद्धया विषयीकरणात् । उपमानकौमुदीगतलिङ्गस्यारोपात्, कौमुदीरूपे ग्रन्थे स्त्रीलिङ्गनिर्देश उपपन्न इति दिक् ॥ १ ॥

## अइउण् इत्यादि ।

एषामकारादिक्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वम् ॥ अत्र संहिताया अविवक्षया सन्धिकार्य्यं न भवतीति । न च संहितैकपदे नित्येत्यनेन सुप्तिङ्चयरूपवाक्य एव संहिताया विवक्षाधीनत्वप्रतीत्या प्रकृते सुप्तिङ्चयरूपवाक्याभावात् कथमविवक्षेति वाच्यम्, यत्र कारकान्वितक्रियायाः प्रतीतिस्तत्रैव सुप्तिङ्चयरूपवाक्यत्वाङ्गीकारः, प्रकृते तु शक्तपदसमुदायस्य वाक्यपदेन ग्रहणात् ॥ अत्राकारादिवर्णेभ्यः "वर्णात्कारः"

इत्यनेन कारप्रत्ययस्तु तत्र "रोगाख्यायां ण्वुल् बहुलम्" इत्यतोऽनु-वृत्तबहुलग्रहणसामर्थ्यान्न भवतीति ॥ अत्रानुकरणत्वेनाकारादि-वर्णेभ्यो न विभक्त्युत्पत्तिः = अनुकार्य्यानुकरणयोरभेदविवक्षाया-मनुकरणशब्दे शक्त्यार्थबोधकत्वरूपार्थवत्त्वाभावेनाप्रातिपदि-कत्वान्न विभक्त्युत्पत्तिरित्यर्थः। न चानुकार्य्यानुकरणयोर्भेदविवक्षा-यामनुकरणशब्दस्य शक्त्यार्थबोधकत्वरूपार्थवत्त्वेन प्रातिपदि-कत्त्वात् विभक्त्युत्पत्तिरिति वाच्यम् अनुकार्यानुकरणयोर्भेदपक्षे सौत्रत्वात् विभक्त्यनुत्पत्तिरिति समाधानात् ॥ अत्र हकार-स्य द्विवारं पाठस्तु अट्, शल् प्रत्याहारेषु हकारग्रहणार्थः। अट् प्रत्याहारे 'हयवरट्' इति सूत्रे हकारस्य पाठेन अर्हेण इत्यत्र 'अट्-कुप्वाङ्……'इत्यनेन णत्वं भवति। शल्प्रत्याहारे 'हल्' इति सूत्रे हकारस्य पाठेन अधुक्षदित्यत्र 'शलिगुपधादनिटः' इति सूत्रेण क्सो भवति॥

ननु 'शषसहर्' इत्येव सूत्रमस्तु 'हल्' इति पृथक् सूत्रं न कार्य्यम्, यानि च अल्, हलित्यादीनि लकारेण प्रत्याहाराणि तानि रेफेणैव कार्य्याणीति चेन्न खरि हकारप्रवेशे हरिर्हसतीत्यादौ विसर्गापत्तेः, वाग्-हरिरित्यादौ 'खरि च' इति चर्त्वापत्तेश्चेति बोध्यमिति दिक् ॥ २ ॥

## इति माहेश्वराणि……।

नन्वेषां चतुर्दशसूत्राणामक्षरसमाम्नायशब्देन व्यवहारः। आम्ना-यस्तु वेदः, वेदस्त्वनादिः न तस्य कश्चिदाधुनिकः कर्ता, एषां चतु-र्दशसूत्राणान्तु पाणिनिः कर्ता अतः एषामादित्वम्, तथा च कथ-मेषामनादित्वेन व्यवहार इत्याशयेनाह—इति माहेश्वराणि……इति = इमानि चतुर्दश सूत्राणि महेश्वरादागतानि महेश्वरवरप्रसादात्पा-णिनिना लब्धानीति तदर्थः। अत्र प्रमाणम्—येनाक्षरसमाम्नायमिति शिक्षावचनम्, अतएव नृत्तावसान इति संगच्छत इति दिक् ॥ ३ ॥

## अणादिसंज्ञार्थानि।

ननु किमर्थो वर्णानामुपदेशः—वृत्तिसमवायार्थः—पाणिनेर्लाघवेन शास्त्रप्रवृत्त्यर्थः—वर्णानां क्रमेण सन्निवेशः स चाणादिप्रत्याहार-

द्वारा शास्त्रप्रवृत्त्यर्थं इत्याशयेनाह—अणादिसंज्ञार्थानि इति=अण् आदिर्यासां ताः, अणादयः, अणादयश्च ताः संज्ञाः अणादिसंज्ञाःता एवार्थः प्रयोजनं येषां तानि अणादिसंज्ञार्थानि ॥ ४ ॥

## एषामन्त्या इतः।

अणादिसंज्ञायाः सिद्धिप्रकारमाह-एषामन्त्या इतः, इति=एषां चतुर्दशसूत्राणामन्त्याः वर्णाः इत्संज्ञकाः भवन्ति तथा च "आदिरन्त्येन सहेता" इत्यनेनाणादिसंज्ञायाः सिद्धिः। न चानादित्वेन णादीनां वर्णानां कथमित्संज्ञेति वाच्यम् महेश्वरेणाणादिसंज्ञासिद्ध्यर्थमेव णादीनां वर्णानामुच्चारणं कृतमिति स्वीकारात्। अतएव "अत्र सर्वत्र सूत्रेष्वन्त्यं वर्णचतुर्दशम्। धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये" इत्युक्तम्। अत्र धात्वर्थम्=धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् करणशब्देनानुबन्धानां सादित्वं सूचितम्। तद्व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितमिति भावः ॥ ५ ॥

## लण्सूत्रेऽकारश्च।

ननु "उरण् रपरः" इति सूत्रे ऋलृवर्णयोः सावर्ण्यात् ऋकारग्रहणेन लृकारस्य ग्रहणेऽपि, प्रमाणाभावात् रेफग्रहणेन लकारस्य ग्रहणं न स्यात्, तथा च तवल्कार इत्यादौ लृकारस्थाने "उरण्रपरः" इत्यनेन लकारादेशो न स्यात् किन्तु रपरत्वं स्यादित्याशंक्य—"तुल्यास्यप्रयत्नम्" इति सूत्रोपरि 'लपरत्वं वक्ष्यामि' इति वार्तिकं भाष्यकृता कृतम् ततः 'र—प्रत्याहाररूपेण व्याख्यास्यामि' इति वार्त्तिकार्थः कैयटेन कृतः। व्याख्यानञ्च लण्सूत्रेऽकारस्यानुनासिकत्वं तस्योपदेशेऽजनुनासिक इदिति सूत्रेणेत्संज्ञा ततः "आदिरन्त्येन सहेता" इति—र—प्रत्याहारसिद्धिः।—

न च र—प्रत्याहारस्वीकारे "रदाभ्याम्……"इत्यत्रापि रप्रत्याहारग्रहणे सोपसर्गात् त्रिफला धातोः निष्ठायाम् "आदितश्च" इति इडागमाभावे प्रफुल्लुतः इत्यादौ लकारात् परस्य निष्ठातकारस्य रदाभ्यामिति सूत्रेण नत्वं स्यात्। किञ्च 'रोऽसुपि' इत्यत्रापि र—प्रत्या-

हारग्रहणे, अहरहरित्यादौ पक्षे लकारःस्यात्, 'वनो र च' इत्यर्थनेनापि पक्षे लत्वं स्यादित्यादि र-प्रत्याहारस्वीकारे दूषणमिति वाच्यम् "अतो लृान्तस्य" इति सूत्रे र—प्रत्याहारेणैव सिद्धौ लकारोच्चारणसामर्थ्याद् र—प्रत्याहारस्यानित्यत्वेन "रदाभ्याम्……"इत्यादौ न र—प्रत्याहारग्रहणमिति स्वीकारात्। न च लण्सूत्रेऽकारस्यानुनासिकत्वे "जातेरस्त्रीविषयादयोपधात्" इति सूत्रेऽपि य—प्रत्याहारग्रहणे महाशूद्रीत्यादौ योपधत्वेन ङीषभावापत्तिस्स्यात्, किञ्च "ङेर्य्यः" इत्यत्र य—प्रत्याहारग्रहणे रामायेत्यादौ य्वाद्यादेशचतुष्टये सति अनिष्टरूपचतुष्टयापत्तिस्स्यादिति वाच्यम् "इणो यण्, इक् यणः, इको यणचि" इत्यादावर्धमात्रालाघवानुरोधेन य—प्रत्याहारेणैव सिद्धौ तत्र तत्र णकारग्रहणसामर्थ्येन, तादृशप्रत्याहारस्यादर्शनेन च "जातेरस्त्री……" 'योऽचि' इत्यादौ न य—प्रत्याहारग्रहणशङ्केति स्वीकारादित्याशयेनाह—लण्सूत्रेऽकारश्च इति,=लण्सूत्रेऽकारस्येत्संज्ञा। तेन र—प्रत्याहारसिद्धिरिति[1] प्राञ्चः॥

अत्र नव्याः—लण्घटकाकारस्यानुनासिकत्वेऽनुबन्धानाम् प्रत्याहारे ग्रहणाभावे, आचारात्, अप्रधानत्वात्, लोपश्च बलवत्तरः, इति भाष्योक्तस्य तृतीयहेतोरव्यापकत्वापत्तिस्स्यात्=चतुर्दशसूत्रीघटका अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात्, तत्र लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोर्विरहेण भाष्योक्तहेतोरव्यापकत्वापत्तिरिति तदाशयः। अयं भावः—लोपस्य बलवत्त्वेन णकाराद्यनुबन्धानामज्प्रत्याहारे ग्रहणभावेऽपि, लणित्यकारस्यानुनासिकत्वे हल्प्रत्याहारासिद्धः प्रागज्पदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्संज्ञालोपयोरभावेन लोपरूपहेतोरसत्त्वेन तस्याव्यापकत्वापत्तिस्स्फुटैव। तथा च हल्प्रत्याहारे लणित्यकारप्रवेशेऽनितेःक्विपि "अनुनासिकस्य………"इति सूत्रेण दीर्घे सम्बुद्धौ—आन्, माम्×आन्×त्रायस्वेति दशायाम् "नश्छव्यप्रशान्"

१ र—प्रत्याहारस्य सिद्धिप्रकारं ब्रूतेति प्रश्ने—एतत्पर्यन्तं व्याख्यानमुत्तरं परीक्षोपयोगि च।

इति सूत्रेण रुत्वे मामाँत्रायस्व, इत्यत्रानुनासिकपक्षे "मोऽनुस्वारः" इत्यनेनानुस्वारापत्तिः । न चाक्षरसमाम्नायिकानामेव ग्राहकशास्त्रे ग्रहणेन सानुनासिकाकारस्यानण्त्वात् हलि ग्रहणं न स्यादिति वाच्यम् प्रत्याहारेषु जातिपक्षस्यैवाश्रयणेन दीर्घसानुनासिकस्यापि ग्रहणं भवतीति स्वीकारात् । ह्रस्वत्वविशिष्टजातिनिर्देशस्यैव ग्रहणे तु सोऽस्तीत्यादौ सुलोपःस्यादिति दूषणं बोध्यम् । [१]अतएव 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' इत्यनेन वर्णसमाम्नायघटकेऽच्प्रत्याहारे ये, एते प्रत्याहारार्था अनुबन्धाःक्रियन्ते तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाच्प्रत्याहारे शङ्कां कृत्वा, 'लोपस्य बलवत्त्वम्' इति समाधानं भाष्ये दत्तम् । यदि च लण्सूत्रेऽप्यकारस्यानुनासिकत्वं स्यात्तर्हि हल् प्रत्याहारेऽपि शङ्कासमाधानं भाष्यकारेण कर्त्तव्यं स्यात् । तस्मात् लण्सूत्रेऽकारस्यानुनासिकत्वमप्रामाणिकम् । "उरण् रपरः" इत्यत्र तु लकारग्रहणं कर्त्तव्यमित्येव 'लपरत्वं वक्ष्यामि' इति वार्तिकस्यार्थः । ननु 'र-प्रत्याहाररूपेण व्याख्यास्यामि' इति कैयटार्थो युक्त इति आहुः ॥ ( इति र—प्रत्याहारखण्डनम् )

अत्रेदं तत्त्वम्—"उरण् रपरः" इत्यत्र लकारग्रहणाभावरूपलाघवेन 'लपरत्वं वक्ष्यामि' इत्यस्य र—प्रत्याहाररूपेण व्याख्यास्यामीति कैयटार्थ एव ज्यायान् । यदि च लकारग्रहणं कर्त्तव्यमिति लपरत्वं वक्ष्यामीत्यस्यार्थस्स्यात्तर्हि 'लपर इति वक्तव्यम्' इत्येवंरूपेण वार्त्तिकभाष्यकृता कृतं स्यात् । न चैवं भाष्योक्त 'लोपश्च बलवत्तरः' इति तृतीयहेतोरव्यापकत्त्वापत्तिरिति वाच्यम् इत्संज्ञावत्त्वस्यैवानुबन्धत्वस्य पक्षतावच्छेदकतया तस्य हल्प्रत्याहारसिद्धेः प्राक् लण्घटकाकारे तदभावे पक्षतावच्छेदकानाक्रान्तत्वादिति दिक्[२] ॥ ६ ॥

## हकारादिष्वकार उच्चारणार्थः ।

ननु हयवरेत्यादावकारोच्चारणेनाकारविशिष्टस्यैव हकारादेः तत्तत् प्रत्याहारेषु ग्रहणे रामो हिनस्तिस्म रावणमित्यादौ 'हशि च'

१ लण्घटकाकारस्यानुनासिकत्वाभावादेव ।

२ ( इति र—प्रत्याहारखण्डनम् )

इत्युत्त्वादिकं न स्यादत आह—"हकारादिष्वकार...इति,=न ह्य-चं विना व्यञ्जनस्योच्चारणं सम्भवतीत्युच्चैरुदात्त इति सूत्रभाष्येण प्राथम्यादकारेणैव हल उच्चरिताः। अतः तस्योच्चारणार्थत्वमेव युक्तं न तु तत्राकारो विवक्षित इति भावः। केचित्तु- हयेत्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्ग इत्यवतरणमस्याहुः तन्न युक्तम्, अकारस्य हकारा-दिवत् सकृदुच्चारयितव्ये पुनः पुनरकारोच्चारणेन तस्य हल्त्वप्रसङ्ग-दोषस्यानुदयादिति ॥ ७ ॥

## हलन्त्यम् ।

[1]ननु 'न विभक्तौ तुस्माः' इति सूत्रसार्थक्याय--हलन्त्यमित्यस्योप-देशेऽन्त्यं हलित् स्यादित्यर्थः, आवश्यकः। तथा च-पदार्थज्ञानं विना वाक्यार्थज्ञानस्यासम्भवात्—हल्पदार्थज्ञानं विना हलन्त्यमित्यस्य वाक्यार्थबोधो न स्यात्, हल्पदार्थज्ञानं तु-आदिरन्त्येन सहेतेति वा-क्यार्थज्ञानाधीनम्, आदिरन्त्येन सहेतेति वाक्यार्थज्ञानं तु-इत्पदार्थ-ज्ञानाधीनम्, इत्पदार्थज्ञान तु-हलन्त्यमित्यस्य वाक्यार्थबोधमन्तरा न सम्भवति, इति हलन्त्यमादिरन्त्येनेत्यनयोर्वाक्यार्थबोधे, उभयसूत्र-वाक्यार्थबोधस्यापेक्षितत्वेन परस्परापेक्षितत्वरूपान्योन्याश्रयदोषः समापद्यते, अन्योन्याश्रयाणि च कार्य्याणि न भवन्तीति भाष्यादेक-स्यापि सूत्रस्य वाक्यार्थबोधो न स्यात्, तस्मात्-हलामित्संज्ञा बोध-नं पाणिनेरयुक्तं स्यात्, अतः सम्पूर्णसूत्रावृत्त्या तं दोषं परिहरति—"हलन्त्यम्" इति=आवर्तितस्य हलन्त्यमित्यस्य हलः अन्त्यमिति सम्बन्धसामान्ये षष्ठ्या सह समासे 'हल्' सूत्रस्यान्तं यत् तदित्-संज्ञं स्यादित्यर्थे हल्घटकलकारस्येत्संज्ञायाम्, इत्पदार्थज्ञानस्य सुलभत्वात् 'आदिरन्त्येन' इति सूत्रस्य वाक्यार्थबोधे जाते हल्पदार्थ-ज्ञाने सति द्वितीयाष्टाध्यायीस्थ 'हलन्त्य' सूत्रवाक्यार्थबोधे न कस्या-प्यपेक्षा । अतो नान्योन्याश्रयशङ्केत्याशयेनाह-"इति हल्संज्ञायाम्"

१ नन्वष्टाध्याय्यामेकमेव हलन्त्यम् सूत्रं वर्त्तते कथं कौमुद्यां द्विवारम् हल-न्त्यम् हलन्त्यमिति चेन्न, अन्योन्याश्रयदोषपरिहाराय हलन्त्यमिति सम्पूर्णसूत्रस्या-वृत्त्योभयहलन्त्यमिति सूत्रस्य कल्पनात् । कथमन्योन्याश्रयदोष आपततीति प्रश्न-स्योत्तरमेव दर्शयति-नन्वित्यादिना।

इति=आभ्यां सूत्राभ्यां हल्मात्रसंज्ञायां सिद्धायाम्, हल्पदार्थज्ञाने जाते अष्टाध्यायीस्थहलन्त्यमिति सूत्रस्योपदेशेऽन्त्यं हलित् स्यादिति वाक्यार्थसिद्धौ हल्प्रत्याहारस्येत्संज्ञाबोधनं पाणिनेर्युक्तं भवतीत्यर्थः ॥ हलन्त्यमिति सूत्रस्यावृत्तौ 'न विभक्तौ तुस्माः' इति सूत्रमेव ज्ञापकम्, अन्यथा हल्पदार्थज्ञानाभावे हलन्त्यमित्यस्य वाक्यार्थासिद्धौ 'न विभक्तौ तुस्मा' इति सूत्रस्य वैयर्थ्यं स्पष्टमेव। भाष्येऽप्यन्योन्याश्रयदोषपरिहाराय "हलन्त्यमित्संज्ञं भवति, लकारश्चेद् भवतीति वक्तव्यम्" इति भाष्यमपि सूत्रावृत्तौ मानं बोध्यमिति[1] ॥

न च न विभक्ताविति विभक्तिपदबोद्ध्यसुप्तिङ्बोधो हलन्त्यमिति वाक्यार्थबोधोत्तरं तद्बोधश्च न विभक्ताविति वाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एवेति वाच्यम्, अपवादवाक्यार्थबोधात् पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात्। नन्वेवमन्योन्याश्रयदोषपरिहारेऽपि, चक्रकदोष आपतति, तथा हि—न विभक्ताविति एतद्विषयनिर्णयानन्तरं हलन्त्यमित्यस्य प्रवृत्तिः, तन्निर्णयश्च न विभक्तावित्येतद्वाक्यार्थबोधानन्तरम्, न विभक्ताविति वाक्यार्थबोधश्च विभक्तिपदार्थनिर्णयानन्तरम्, विभक्तिपदार्थज्ञानन्तु—सुप्पदार्थज्ञानानन्तरम्, सुप्पदार्थज्ञानन्तु स्वौजसिति सूत्रघटकपकारे हलन्त्यसूत्रप्रवृत्त्यनन्तरम्, तत् प्रवृत्तिश्च-न विभक्ताविति विषयनिर्णयानन्तरमिति चेन्न। तुस्मभिन्ना हलं इत्, इति प्रथमवाक्यार्थेन पादीनामित्त्वं ततो विभक्तिपदार्थनिश्चये, न विभक्तावित्यत्र विभक्तिग्रहणसामर्थ्यात् विभक्तिस्थतुस्मभिन्ना हल् इत् इति द्वितीयवाक्यार्थेन विभक्तिस्थतुस्मानामित्वं न भवतीति स्वीकारात् ॥

भाष्येऽप्यन्योन्याश्रयदोषमाशंक्य "हलन्त्यमित्संज्ञं भवति, लकारश्चेदित्युक्त्वा, हल् च हल् च हल्, हलः अन्त्यम्, हलन्त्यमित्येकशेषनिर्देशाद्वा सिद्धमित्युक्तम्" अत्र कृतैकशेषेण हल्पदेन सम्बन्धसामान्ये षष्ठ्या समासः द्वन्द्वान्ते श्रूयमाणवत्, एकशेषान्ते श्रूयमाणस्यान्त्यशब्दस्योभयत्रान्वयः। तथा च—हल्सूत्रस्यान्त्यमित्, हल्रूपान्त्यश्चेदित्यर्थः। हल्रूपान्त्यमिदित्यर्थे राहोः शिर इतिवत् षष्ठी बोध्या। न च सम्पूर्णसूत्रावृत्तौ गौरवात्, लाघवात्

१ एतत्पर्यन्तं व्याख्यानं परीक्षोपयोगि, अतः परं शास्त्रार्थविषयकम्।

भाष्योक्त एकशेष एवास्त्विति वाच्यम्, अत्र ग्रन्थकर्त्तुरेकशेषनिर्देशः, अस्मदादीनां बोद्धॄणान्त्वावृत्त्यैव बोध इति स्वीकारात्॥

ननु हलन्त्यमिति सम्पूर्णसूत्रावृत्त्यपेक्षया लाघवादेकदेशस्य हल्पदस्यैवावृत्तिरस्तु—'हल्' हलन्त्यम्, इति=आवर्तितस्य हलित्यस्य हस्य ल्, इति विग्रहे षष्ठ्याः सामीप्यार्थस्वीकारे हसमीपोलकार इदित्यर्थे हल्सूत्रे लकारस्येत् भवति, हलन्त्यमित्यस्य, उपदेशेऽन्त्यं हलिदिति च वाक्यार्थद्वयं सिद्धमिति कैयटमतं युक्तमिति चेन्न, सामीप्यस्य षष्ठ्यर्थत्वाभावेन षष्ठीसमासाप्राप्तेः, अन्योन्याश्रयपरिहाररूपभाष्याक्षरालाभाच्च। यदि कैयटोक्तं भाष्याभिप्रेतं स्यात्तर्हि अन्योन्याश्रयमाशंक्य--हल्रूपान्त्यमित्, लकारश्चेदित्यनुक्त्वा हसमीपो लकार इदिति भाष्यकारो वदेत्। न च सम्पूर्णसूत्रावृत्त्यपेक्षया लाघवात् सामीप्यस्य षष्ठ्यर्थत्वं स्वीकार्य्यमिति वाच्यम्, हस्य लिदित्यर्थे हल् विलेखने धातोर्लकारस्येत् संज्ञायाम् हे देवदत्त हलित्यादौ ङित्त्वसामर्थ्याद्भस्यापि टेर्लोपवल्लित्त्वसामर्थ्यात् प्रत्ययात् पूर्वत्वाभावेऽपि लित्स्वरस्स्यादिति स्वीकारात्। न च सूत्रावृत्तावपि, अन्त्यं हलित् स्यादित्यर्थे हल्धातोर्लकारस्येत्संज्ञा स्यादिति वाच्यम्, धात्ववयवलकारस्योपदेशेऽन्त्यत्वाभावात्। न च 'हलसीराट्ठक्' इति निर्देशेन धातोर्लस्य नेत्त्वम्, तथा च—कैयटोक्तं युक्तमिति वाच्यम्, ज्ञापकस्वीकारापेक्षया सम्पूर्णसूत्रावृत्तिरेव लघीयसीति स्वीकारात्॥ न च मास्त्वावृत्तिः हल् च ल् चेति समाहारद्वन्द्वे लकारस्य संयोगान्तलोपे हल् रूपान्त्यम्, लरूपान्त्यश्चेत् भवतीति हलन्त्यमित्यस्यार्थे नास्त्यन्योन्याश्रयदोष इति वाच्यम्, यणः प्रतिषेधारम्भेन संयोगान्तलोपस्य दुर्लभत्वात्। तत् प्रत्याख्यानपक्षे झलो झलीति सूत्रात् झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च। सौत्रलोपापेक्षया सम्पूर्णसूत्रावृत्तिरेव लघीयसीति बोध्यम्। न च 'कर्मवत् कर्मणा' इति सूत्रे 'व्यत्ययो बहुलम् लिङ्यायाशिष्यङिति' संहितापाठे द्विलकारको निर्देशः एकस्य लकारस्य संयोगान्तलोपेन लोप इति प्रतिपादितम् तदुपपत्तये क्वचिद्झलोऽपि लोपो भवतीति, किञ्चामोमशिति सूत्रे द्विमकारकनिर्देशेन सर्वादेशे सिद्धे शकारग्रहणं भाष्ये प्रत्याख्यातम्, अत्र एकस्य मकारस्य संयोगान्तलोपेन लोपार्थमझलोपि लोपःस्वीकार्य्य इति, तथा च—लाघवात् हल् च ल चेति समाहारद्वन्द्व एवास्तु, मास्तु सम्पूर्णसूत्रा-

वृत्तिरिति वाच्यम्, पदार्थबोधं विना वाक्यार्थबोधासम्भवे न हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाभावेन हल्शब्दार्थाप्रसिद्धौ द्वन्द्वस्य दुर्लभत्त्वात्। न चाद्यन्तौ टकिताविवेहापि प्रथमतो लकारो हल्पदवाच्य इति सामान्यतः कल्पितबोधमादाय द्वन्द्वसाधुत्वं कृत्वा पश्चात् विशेषजिज्ञासायामादिरन्त्येनेत्येकवाक्यतया विशेषवाक्यार्थो भवतीति वाच्यम् यथासङ्ख्यसूत्रारम्भसामर्थ्येन तत्र द्वन्द्वसाधुत्वेऽप्यत्रान्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात्। तस्मात् सम्पूर्णसूत्रावृत्तिरेव ज्यायसीति बोध्यमिति दिक् ॥ ८ ॥

## प्रतिज्ञानुनासिक्या इति।

ननु सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टोऽतो न ज्ञायते केऽनुनासिकाः केऽननुनासिकाः, तथा चानुनासिकोच्चारणाभावेन भू- इत्यत्र, ऊकारस्येत्संज्ञा स्यादित्याशयेनाह—"प्रतिज्ञानुनासिक्याः पाणिनीयाः इति, प्रतिज्ञायत इति प्रतिज्ञा, अनुनासिकस्य भाव आनुनासिक्यम्, प्रतिज्ञानुनासिक्यं येषान्ते प्रतिज्ञानुनासिक्याः पाणिनिप्रभृतिभिः प्रोक्तवर्णाः पाणिनीयाः ते प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः। यत्तु पाणिनीया इत्यस्य पाणिनिना प्रोक्तं पाणिनीयं तदधीयते विदन्ति वा पाणिनीयाः, पाणिनिशास्त्राध्येतारः प्रतिज्ञानुनासिक्यवन्त इत्युक्तं तत्तु न शोभनं प्रतीयते, अनुनासिकधर्मस्य वर्णनिष्ठत्वेन पाणिनीया इत्यस्य पाणिनिप्रभृतिभिः प्रोक्ताः वर्णा इत्यर्थस्यैव युक्तत्वात् ॥ ९ ॥

ननु लण्सूत्रेऽकारश्चेत्युक्तं परन्तु तस्य फलं न निर्दिष्टमतः सिंहावलोकनन्यायेन तस्य फलं दर्शयितुमाह-लण्सूत्रस्थावर्णेन इति। अत्र यद्वक्तव्यं तत् पूर्वमेवोक्तम् ॥१०॥

## प्रत्याहारेष्वितां न ग्रहणम्।

ननु रलयोः संज्ञेति कथमुच्यते, टकारस्य मध्यगतत्वेन रटलानामिति वक्तुमुचितमित्याशयेनाह-"प्रत्याहारेष्विताम्…"इति— यदि प्रत्याहारे इतामपि ग्रहणमभिप्रेतं स्यात् तदा 'अनुनासिकः' इत्यादौ ककारस्याप्यच्त्वेन तस्मिन् परे पूर्वस्येकारस्य यण्प्रसङ्गः स्यात्। न चेकारविधानसामर्थ्यात् यणोऽप्राप्तिरिति वाच्यम्, शा-

सूत्रस्य साक्षाद्बाधकल्पनापेक्षया प्रत्याहारे इत्संज्ञकानां ग्रहणं नेति वक्तव्यत्वात्। यद्वा प्रत्याहारे इत्संज्ञकानां ग्रहणेऽनुनासिक इत्यत्र ककारस्याकृत्वात् अकारे परे ककारस्य 'अकः सवर्णे दीर्घः' इत्यनेन दीर्घादेशः स्यादिति तदर्थः। "न ह्यत्र ककारे परे……इत्यस्यार्थस्तु= अनुनासिक इत्यत्र ककारस्याकारे परे अच्कार्य्यम्=दीर्घादेशो न दृश्यत इति दिक्॥ ११॥

## ह्रस्वग्रहणमतन्त्रमिति।

ननु यदि अर्धह्रस्वशब्दे कर्मधारयसमासः, तदा यस्य स्वरितस्यार्धो भागः प्रथमो ह्रस्वः स उदात्तः।तथा च दीर्घस्वरिते एव सूत्रप्रवृत्तिःस्यात्। यदि च ह्रस्वस्यार्धमिति षष्ठीसमासस्तदा ह्रस्वस्वरित एव सूत्रस्य प्रवृत्तिःस्यात्। इष्टञ्च ह्रस्वदीर्घप्लुतेषु स्वरितस्य प्रथमार्धमुदात्तमित्याशयेनाह—"ह्रस्वग्रहणमतन्त्रम्" इति अविवक्षितमित्यर्थः। तथा च—ह्रस्वदीर्घप्लुतेषु स्वरितस्य प्रथमार्धमुदात्तं भवतीति सूत्रार्थ इति प्राञ्चः॥ नव्यास्तु—अर्धह्रस्वशब्देन अर्धमात्रा लभ्यते, तथा च—ह्रस्वदीर्घप्लुतेषु स्वरितस्यार्धमात्रैवोदात्तेति वोध्यम्। 'ह्रस्वग्रहणमतन्त्रम्' इत्यस्य, = ह्रस्वपदघटितार्धह्रस्वग्रहणमविवक्षितमित्यर्थः। 'अर्धमुदात्तम्' इति वृत्तिस्तु=अर्धमात्रोदात्तेति सत्यासत्यभामेतिवत् व्याख्येया। 'उत्तरार्धम्' इत्यस्य= अर्धमात्रातोऽवशिष्ट उत्तरभाग इत्यर्थ इति वदन्ति। अयं भावः— ह्रस्वदीर्घप्लुतेषु स्वरितस्यार्धमात्राया उदात्तत्वेन क्रमात्तेषु अर्द्धसार्द्धैकसार्धद्वयमात्रा अवशिष्टा भवन्तीति दिक्॥ १२॥

## मुखनासिकावचनोऽनुनासिकः।

मुखेन सहिता मुखसहिता मुखसहिता चासौ नासिका चेति मुखनासिका, उच्यते अनेनेति वचनम्, मुखनासिकावचनमस्य मुखनासिकावचनः। अत्र करणे ल्युटि सिद्धेन वचनशब्देन बहुव्रीहिरिति भाष्यानुसारिणः। केचित्तु बहुव्रीहिसमासात् तत्पुरुषस्य लघुत्वात् उच्यते असौ वचनं इति बाहुलकात् कर्मणि ल्युट्, मुखेन सहिता मुखसहिता मुखसहिता चासौ नासिका चेति मुखनासिका, मुखनासिकया वचनः मुखनासिकावचन इति वदन्ति। यद्यप्यत्र मुखञ्च ना-

सिका चेति द्वन्द्वे 'द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्' इत्येकवद्भावेन मुखनासिकमिति स्यात् तथापि आ उच्यत इति आवचनम्, मुखनासिकमावचनमस्य सः मुखनासिकावचन इत्येवं सूत्रनिर्देशः संगच्छते । शक्त-इत्यादौ ककारलोपवारणाय मुखनासिकेति सूत्रे नासिकाग्रहणं कर्त्तव्यम् । अन्यथा मुखवचनोऽनुनासिक इति न्यासे ककारस्यानुनासिकत्वे शक्त इत्यादौ 'अनुदात्तोपदेश' इति सूत्रेण कलोपः स्यात् । न चानुदात्तोपदेशे'अनुनासिकस्य क्विझलो क्ङिति' 'यरोऽनुनासिकेऽनुनासिको वेति' सर्वत्र सूत्रे ञमिति न्यासेन शक्तः,पक्, विद्त्रेत्यादौ दोष वारणसम्भवात् नासिकाग्रहणं न कार्य्यमिति वाच्यम् । यरोऽनुनासिक- इति सूत्रस्थाने 'यरो ञमो ञम्' इति न्यासे 'ॐ' इति सूत्रनिष्पन्नॐ शब्दे परे यदेतनूँ इत्यत्रानुनासिकाऽनापत्तेः ॥ मुखग्रहणाभावे नासिकावचनोऽनुनासिक इत्युच्यमाने "अनुस्वारयमानां च नासिका स्थानमुच्यते" इति शिक्षावाक्यात् यमानुस्वाराणामेवानुनासिकसंज्ञा स्यात् ञमङणनानाञ्च न स्यात् तथा च 'विड्वनोरनुनासिकस्या'दित्यादिषु त्वनुवादप्रदेशेषु ञमिति न्यासेन दोषवारणेऽपि विधिप्रदेशेषु "आङोऽनुनासिकः" इत्यादौ सर्वत्र यमानुस्वाराः एवादेशा भवन्तीति स्वीकारे अभ्र आँ अप इत्यत्रानुस्वारः स्यात् । मुखग्रहणे तु न दोषोऽतो मुखग्रहणं कर्त्तव्यमेव । यदि तु भाष्योक्त प्रसादवासि' न्यायेनोभयवचनानां ग्रहणं भवेत्तर्हि मुखग्रहणं प्रत्याख्या तमेवेत्यधिकमत्रत्यभाष्ये द्रष्टव्यम् ॥ १२ ॥

## तुल्यास्यप्रयत्नं सवर्णम् ।

तोलनं तुला तया समितौ तुल्यौ, अस्यन्ति उच्चारयन्ति वर्णा अनेनेत्यास्यम्, आस्ये भवमास्यम्, प्रकृष्टो यत्नः प्रयत्नः, आस्यञ्च प्रयत्नश्चास्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य तत् तुल्यास्यप्रयत्नम् । समानं वर्णम्—सवर्णम् ।

नन्वत्र सूत्रे आस्यग्रहणं न कार्य्यम् "तुल्यप्रयत्नं सवर्णम्" इत्येव सूत्रमस्तु । आभ्यन्तरप्रयत्नो यस्य येन तुल्यस्तन्मिथः सवर्णसंज्ञं स्यादित्यर्थः ।

न चास्य ग्रहणाभावे तर्तैत्यादौ पकारतकारयोः सावर्ण्यात् पकारस्य तकारे परे "झरो झरि सवर्णे" इति सूत्रेण लोपः स्यादिति वाच्यम्

'झरो झरि सवर्णे' इति सूत्रे 'सवर्णे किं तर्त्तेति' भाष्यात् एतयोरसवर्णसंज्ञा न स्यादिति कल्पनात्। न च भाष्ये 'सवर्णे किं सन्तसरू इति' प्रत्युदाहरणे तत्र दोष इति वाच्यम्, "ऋलृवर्णयोः" इति वार्त्तिकसामर्थ्येन भिन्नस्थानयोर्न सवर्णसंज्ञा भवतीति ज्ञापनादिति चेन्न, वार्त्तिकप्रामाण्येन सूत्राक्षरस्य खण्डनमयुक्तमिति नियमात्, अचोश्चेत् ऋलृवर्णयोरेवेति नियमस्यापि सम्भवाच्च।

नन्वत्र "तुल्यास्यं सवर्णम्" इत्येव सूत्रमस्तु प्रयत्नग्रहणं न कार्य्यम्। ताल्वादिस्थानं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यादित्यर्थः।

न च प्रयत्नग्रहणाभावे वाक्श्चोततीत्यत्र शकारचकारयोः सवर्णसंज्ञायां सत्यां "झरो झरि सवर्णे" इति सूत्रेण शकारस्य लोपः स्यादिति वाच्यम्, 'झरो झरि सवर्णे'-इत्यस्य स्थाने हलः परस्य झयो लोपः स्यात् सवर्णे झयीत्यर्थकेन "झयोझयिसवर्णे" इति न्यासेन शकारस्य झय्-प्रत्याहारे पाठाभावेनादोषात्। न चैवं न्यासे निंसे निंस्से निंस्स्व निंस्वत्यादौ झयि सकारस्य पाठाभावेन सलोपो न स्यादिति वाच्यम्, वर्णसमाम्नाये "कपय्, शषसर्, हल्" इत्यस्य स्थाने "कपसय्, शषर्, हल्" इति न्यासेन झय्-प्रत्याहारे सकारस्य पाठेन तत्र 'झयो झयि' इति न्यासेनैव सलोपस्य सुलभत्वात्। न च 'कपसय्, शषर्' इति न्यासे शर्-प्रत्याहारे सकारस्य पाठाभावेन प्राङ्क्षु गवाङ्क्षु इत्यादौ 'ङ्णोः कुक् टुक् शरि' इत्यनेन कुक् न स्यात्, एवं कः त्सरुः इत्यत्र 'शपरे-विसर्जनीयः' इत्यनेन विसर्जनीयो न स्यात्, रामस्थाता हरिस्फुरतीत्यादौ "खर्परे शरि वा विसर्गलोपः" इति पाक्षिकविसर्गलोपश्च न स्यादिति वाच्यम् तत्र तत्र सूत्रे "शर्" इत्यस्य स्थाने "सर्" इति न्यासेन कपसय्-सकारमारभ्य शषरोरेफेण सर् प्रत्याहार-स्वीकारेणोक्तदोषानामभावात्। न च "कपसय्, शषर्" इति न्यासे खय् प्रत्याहारे सकारस्य पाठेन पुंसहनमित्यत्र "पुमः खय्यमपरे" इति सूत्रेण रुत्वापत्त्या पुंस्सहनमित्यनिष्टं स्यादिति वाच्यम्, तत्स्थाने "पुमः खव्यमपरे" इति न्यासेन खव् प्रत्याहारे सकारस्य पाठाभावेनोक्तदोषाभावात्। न च "पुमः खव्यमपरे" इति न्यासे खव् प्रत्याहारे ककारपकारयोः पाठाभावेन पुंस्कोकिलः पुंस्पुत्र इत्यादौ रुत्वं न स्यादिति वाच्यम् वर्णसमाम्नाये "खफछठथचटतकपव्, सय्, शषर्, हल्" इति न्यासेन खव्प्रत्याहारे ककारपकारयोः पाठसत्त्वेनोक्तदोषा-

भावात् । न च 'खफछठथचटतकपव्' इति न्यासे छव्—प्रत्याहारे ककार-पकारयोः पाठसत्त्वेन सन्कोकिलः सन्पुत्र इत्यादौ 'नश्छव्यप्रशान्' इति सूत्रेण रुत्वापत्त्या संस्कोकिलः संस्पुत्र इत्यनिष्टं स्यादिति वाच्यम्, तत्र 'खफकपछठथचटतव्' इति न्यासेन छव्प्रत्याहारे ककारपकारयोः पाठाभावेनोक्तदोषाभावात् । न च तत्र 'खफकपछठथचटतव्, सय्, शषर्, हल्' इति न्यासे चर्प्रत्याहारे ककारपकारयोःपाठाभावेन पफालेत्यादीनामसिद्धिरिति वाच्यम्, 'खचफकपछठथटतव्' इति न्यासेन चर्प्रत्याहारे पकारस्य पाठेनोक्तदोषाभावात् । न चैवं चरप्रत्याहारे छकारस्य 'पाठे प्रकृतिचरां प्रकृतिचर' इति विवेकात् छर्दधातोः लिटि छकारस्थाने छकारादेशे चच्छर्देति न स्यादिति वाच्यम् । हलः परस्य सकारस्य झयश्च लोपस्स्यात् सकारे सवर्णे झयि च परे, इत्यर्थकेन "सझयः सझयि सवर्णे" इति न्यासेन निंसे इत्यादौ सलोपस्य सिद्धत्त्वात् ।

यत्तु "प्रयत्नग्रहणाभावेवाक्श्चोततीत्यत्र तु'झरोझरि सवर्णे' इत्यत्र 'झयोझयि' इति न्यासं कृत्वा लोपं व्यावर्त्य निंसे इत्यादौ झलो झलीति लोपेन निर्वाहः" इत्युक्तम् तदसङ्गतम् झलः परस्य सस्य लोपः स्यात् झलीत्यर्थकेन झलोझलीति सूत्रेण सलोपे निंसे निंस्से इत्यादि–वैकल्पिकस्यासिद्धेः झलोझलीति सूत्रं प्रति 'नश्चापदान्तस्य' इत्यनुस्वारस्य परत्रिपादिकस्यासिद्धत्वेन निन्स्से इत्यवस्थायां नकारस्य झल्प्रत्याहारे पाठाभावेन तेन सलोपस्य कथमप्यप्रवृत्तेः । निंसे इत्यादौ झरोझरीत्यनेनैव वैकल्पिकसलोपो भवतीति बोध्यम् ।

न च प्रयत्नग्रहणाभावे रेफणकारयोर्मूर्धास्थानिकत्वेन सवर्णसंज्ञायां कुण्डं रथेनेत्यत्र रेफसावर्ण्येनानुस्वारस्य णकारः परसवर्णः स्यादिति वाच्यम्, तुल्यास्यसूत्रे 'तुल्यास्यमर्णम् सवर्णम्' इति न्यासेन रेफणकारभिन्नं सवर्णमित्यर्थकेनादोषात् । न च हकारकवर्गयोः शकारचवर्गयोः सवर्णसंज्ञायां उदितः सवर्णग्राहकत्वेन वाक्श्चोततीत्यादौ 'चोःकु' इतिसूत्रेण शकारस्य स्थाने हकारोपि स्यादिति वाच्यम्, 'कुहोश्चुः' इत्यत्र हकारोपादानेन कवर्गोपादानेन च पञ्चवर्गभिन्नग्रहणेन वर्गस्य ग्रहणं न, वर्गग्रहणेन तद्भिन्नग्रहणं नेति ज्ञापनेनादोषात् । अतएव ज्ञापकात् ककारहकारयोः सवर्णसंज्ञायां तत्करोतीत्यादौ "झयोहोऽन्यतरस्याम्" इत्यस्यापि न प्रवृत्तिः, यकारचकारयोः सवर्ण-

संज्ञायां चकारस्याप्यट्त्वेन वाक्श्चोततीत्यादौ शकारस्य 'शश्छोऽटि' इति छत्वापत्तिरपि निरस्ता। न च प्रयत्नग्रहणाभावे यकारशकारयोः तालव्यत्वात् सवर्णसंज्ञायां यकारस्याण्त्वेन तद्ग्रहणेन शकारग्रहणे अश्वादि—शब्दे लोपो व्योर्वलीति सूत्रेण वलपरतः शकारस्यापि लोपः स्यात्, किञ्च हरिं शंकर इत्यादौ शकारे परेऽनुस्वारस्य परसवर्णानुनासिको यकारस्यात् 'रेफोष्माणः सवर्णान्न गृह्णन्तीति' भाष्यन्तु प्रयत्नग्रहणसत्त्वे एवेति वाच्यम् यकाररेफलकारैः शषसानां ग्रहणे सिद्धे सषशर् इति सूत्रारम्भसामर्थ्येन यकार-रेफ-लकारग्रहणेन शषसानां ग्रहणं नेति ज्ञापनात्। न च शरोचि, वाशरि, शर्परेविसर्जनीयः, इत्याद्यर्थं शर्प्रत्याहारस्यावश्यकत्वेन शषसर् इति सूत्रस्यं चारिताथ्र्यसम्भवेनोक्तदोषस्य तादवस्थ्यमेवेति वाच्यम्, रषाभ्यामित्यत्र षग्रहणेनोक्तार्थज्ञापनात्। एतेन प्रयत्नग्रहणाभावे दर्शनमित्यत्र णत्वं स्यादिति निरस्तम्। अतएव तत्सीदतीत्यादौ लत्वमपि न, तस्मात् प्रयत्नग्रहणं व्यर्थमेवेति चेन्न मात्रालाघवसत्त्वेपि बहूनामर्थानां कल्पनेन ज्ञानगौरवात् ॥१४॥

## अ अ इति।

अत्र प्रथमोऽकारो विवृतः लुप्तषष्ठीकः परश्च संवृतः प्रथमान्तः, प्रयत्नभेदात् सन्धिर्नेति ज्ञेयम्। ननु 'अअइति' सूत्रेण विवृतह्रस्वाकारस्य संवृतविधाने दण्डाढकमित्यादौ संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घाकारेण सह सावर्ण्याभावात् दीर्घो न स्यादित्याशयेनाह—'प्रक्रियादशायां विवृतम्' इति, अयं भावः—'अअइति' सूत्रेण विवृताकारस्य स्थाने संवृताकारो विधीयते परन्तु साधनावस्थायां पूर्वत्रासिद्धमित्यनेन दीर्घं प्रति 'अअइति' सूत्रस्यासिद्धत्वात् ह्रस्वाकारस्य विवृतत्वेन सावर्ण्यात् उक्तप्रयोगे दीर्घादेश इति दिक् ॥ १५ ॥

## नाऽज्झलौ।

( यद्यपीत्यादि ) ननु नाज्झलाविति सूत्रप्रणयनकाले 'अणुदित्' सूत्रस्याप्रणयनात् नाज्झलाविति सूत्रे 'अणुदित्' सूत्रेण दीर्घाकारादीनामग्रहणात् नाज्झलाविति सूत्रेण दीर्घाकारहकारयोः सवर्णसंज्ञाया निषेधाभावेन दीर्घाकार-हकारयोः सवर्णसंज्ञायाम् "ह्रोढः" इत्यत्र

ग्रहणकशास्त्रबलात् हकारग्रहणेन दीर्घाकारस्य ग्रहणे विश्वपाभिरित्यादौ "होढः" इत्यनेन ढत्वं स्यादिति चेन्न, नाज्झलाविति सूत्रे दीर्घाकारादीनां प्रश्लिष्टत्वात्। नाज्झलाविति सूत्रे दीर्घाकारादीनां प्रश्लेषेण दीर्घाकारहकारयोरपि सवर्णसंज्ञाया निषिद्धत्वात् 'होढः' इत्यत्र हकारग्रहणेन दीर्घाकारस्याग्रहणे विश्वपाभिरित्यादौ 'होढः' इत्यनेन ढत्वस्याप्रवृत्तेरिति भावः। अतएव 'कालसमयवेलासु' इति निर्देशः संगच्छते, अन्यथा इणूप्रत्याहारे हकारस्य पाठेन. अकारस्य हकारसवर्णत्वेनाऽऽकारस्यापि इण्त्वात् 'आदेशप्रत्यययोः' इत्यनेन सकारस्य षत्वे निर्देशासंगतिःस्यात्। 'हेयियाउसो, हेपिपाउसो' इति भाष्यप्रयोगात् प्लुताकारस्यापि प्रश्लेषोऽत्र बोध्यः। तथा च समासः आश्च आ३श्च औ, आभ्याम् सहितः आसहितः आसहितश्चासौ अच्च आच्, आच् च हल् च आज्झलौ, न आज्झलौ नाऽऽज्झलौ। अत्र आश्च अच् आच्चेति समाहारद्वन्द्वे तु टच्प्रसङ्गःस्यात्। अज्झलिति समाहारद्वन्द्वं कृत्वा आपदेनद्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यात्। न चाज्भिराकारस्य सावर्ण्याभावे इष्टापत्तिरिति वाच्यम्, प्रयत्नभेदेन भाष्येऽज्झलोरेव सावर्ण्याभावसाधनेन ज्ञायते अकाराकारयोः सवर्णसंज्ञायाः निषेधाभावात्। यद्यकाराकारयोरपि सावर्ण्याभावोऽभिप्रेतस्स्यात् तदा अज्झलोः प्रयत्नभेदेन यथा सावर्ण्याभावः साधितो भाष्ये तथा अकाराकारयोरपि सावर्ण्याभावः प्रकारान्तरेण साधितस्स्यादिति भावः। अतोऽत्र सूत्रकारभाष्यकारयोः मतैक्याय मध्यमपदलोपी समास एव युक्तस्स्यात्॥ न च नाज्झलावित्यत्राच्पदे 'अणुदित्' सूत्रप्रवृत्या दीर्घादीनां ग्रहणेन आकारहकारयोः सवर्णसंज्ञानिषेधे विश्वपाभिरित्यादौ ढत्वाभावे सिद्धे तदर्थमाकारप्रश्लेषो न कार्य्यं इति वाच्यम् पूर्वं वर्णानामुपदेशः तदुत्तरमित्संज्ञा, तदुत्तरमादिरन्त्येनेति प्रत्याहारसिद्धिः, तदुत्तरकालासवर्णसंज्ञा, तदुत्तरकालमणुदिदिति समुदिते पञ्चधावाक्ये "अणुदित्" सूत्रस्याप्रवृत्तेः। न च पूर्वोक्तपञ्चधावाक्ये नाज्झलाविति निषेधस्याप्रवेशात् कथं तत्र तस्य ग्रहणमिति वाच्यम् विधिनिषेधयोरेकवाक्यताऽनुभवसिद्धा सा च निषेधवाक्यार्थग्रहात्पूर्वंनसम्भवति, एवञ्चाज्झलभिन्नं यत् तुल्यास्यप्रयत्न तत् सवर्ण संज्ञकं भवतीत्यर्थेन नाज्झलावित्यस्यापि पञ्चधावाक्ये प्रविष्टत्वात्। तथा च पूर्वोक्तभाष्येण नाज्झलावित्येतत्प्राक् अणुदित् सूत्रस्या

प्रसिद्ध्या नाज्झलावित्यनेन ह्रस्वानामेव हल्भिः सवर्णसंज्ञानिषेधात् दीर्घाकारहकारयोः सावर्ण्यात् विश्वपाभिरित्यादौ ढत्वं स्यात् तद्वारणाय दीर्घाकारादीनां प्रश्लेषः कार्य्य एवेत्येतत् सर्वं मनसि निधाय मूले आह—"यद्यपि" इत्यादि[1]।

*न च यथा हलन्त्यमित्यत्र चक्रकदोषवारणाय 'न विभक्तौ तुस्माः' इत्यत्र द्वितीयवाक्यार्थः स्वीकृतः तथैव नाज्झलावित्यत्राक्षरसमाम्नायिकाः अचो हलश्च मिथो न सवर्णसंज्ञका इति प्रथमवाक्यार्थे जाते पश्चात् अणुदित्सूत्रबोधानन्तरमचस्तद्गृहीताश्च हल्भिर्मिथो न सवर्णसंज्ञका इति द्वितीयवाक्यार्थे सति आकारप्रश्लेषो व्यर्थः, वाक्यापरिसमाप्तिन्यायश्चासङ्गत इति वाच्यम् न विभक्तावित्यत्र विभक्तिग्रहणसामर्थ्यात् द्वितीयवाक्यार्थाङ्गीकारेऽप्यत्र तदङ्गीकारे प्रमाणाभावात्। अतएव 'अकः सवर्णे दीर्घः' इत्यत्राचिग्रहणस्यानुवर्तनं कृतमन्यथा तव मते नाज्झलावित्यत्र ग्रहणकशास्त्रप्रवृत्त्या दीर्घेकारशकारकयोः सवर्णसंज्ञायाः निषेधेन कुमारी शेते इत्यत्र दीर्घस्याप्रवृत्त्या अचिग्रहणस्यानुवर्तनं व्यर्थं स्यात्। न च नाज्झलाविति सूत्रे जातिपक्षेऽत्वजात्याक्रान्तदीर्घादेरपि हल्भिः निषेधसिद्धौ किमाकारप्रश्लेषेण किञ्च जातिपक्षे अज्झलोः सवर्णसंज्ञायामपि तत्र तत्र अत्त्वादिजातेरभावात् दधि हरतीत्यादौ दोषाभावेन दधि हरतीति मूलमसङ्गतमिति वाच्यम् अत्रस्थभाष्यप्रामाण्येनात्र व्यक्तिपक्षस्यैवावलम्बनात्। न च जातिपक्षे अणुदित्सूत्रेऽण्ग्रहणस्याभावात् आकारहकारयोः अज्झलोश्च सवर्णसंज्ञायामपि 'इको यणचि' इत्यादावच्ग्रहणेन हकारादीनामग्रहणात् दधि हरतीत्यादौ यणादिकं न स्यात् होढ इत्यत्र हकारेणाऽऽकारस्याग्रहणे विश्वपाभिरित्यादौ ढत्वादिकञ्च न स्यात् किमनेन प्रपञ्चेनेति वाच्यम् व्यक्तिपक्ष एव शङ्कासमाधानस्योक्तत्वात्॥

ननु प्रथमोपस्थितत्वात् विश्वपा इति विहाय विश्वपाभिरित्यत्र ढत्वप्रतिपादनमयुक्तम्। न च विश्वपा इत्यत्र रुत्वे विसर्गे च कृते झल्परत्वाभावात् 'होढः' इत्यनेन ढत्वस्य प्रवृत्तिरेव नास्तीति वाच्यम्, अयोगवाहानां शर्षु पाठात् शरः झलन्तर्गतत्वेन विश्वपा इत्यत्र होढ इत्य-

१ विश्वपाभिरित्यत्र ढत्वं कथमाशङ्कितं कथञ्च वारितमिति प्रश्ने—एतत्पर्य्यन्तं व्याख्यानमुत्तरं परिक्षोपयोगि च।

* अतः परं शास्त्रार्थोपयोगि।

नेन ढत्वप्रवृत्तेरावश्यकत्वादिति चेन्न विश्वपाभिरिति विश्वपा इत्यस्याप्युपलक्षणत्वात् ॥

न च विश्वपाभिरित्यत्र ढत्वसंयोगान्तलोपयोः प्राप्तयोः ढत्वस्यासिद्धत्वात् संयोगान्तलोप एव स्यादिति मूले ढत्वमित्यनुपपन्नमिति वाच्यम् हकारेणाकारग्रहणे सति यद्यद्प्राप्नोति तस्य सर्वस्योपलक्षणत्वात्। न चोच्चरितस्यैव प्रत्यायकत्वं नानुच्चरितस्येति सिद्धान्तात् इकारस्याच्पदबोध्यत्वेऽपि तस्यानुच्चरितत्वात् प्रत्यायकता नोपपद्यत इति, तथा चाच्प्रत्याहारे इकारादिना शकारादीनामग्रहणात् मूले हकारादीनामित्यादिपदेन शकारादिसंग्राहकता नोपपद्यत इति वाच्यम् , अज्झलोः प्रतिषेधे शकारस्य प्रतिषेधोऽज्झल्त्वादिति वार्तिकेण प्रत्याहारघटकेष्वपि अणुदित्सूत्रस्य प्रवृत्तेः ॥ न च व्यक्तिपक्षे दीर्घाकारप्रश्लेषेण दीर्घाकारहकारयोः सवर्णसंज्ञायाः निषेधेऽपि दीर्घेकारशकारयोः सवर्णसंज्ञायाम् गौरीभ्यामित्यादौ शकारग्रहणेन ईकारस्य ग्रहणे व्रश्चभ्रस्जेति सूत्रेण ईकारस्य षत्वं स्यादिति वाच्यम् , अण्प्रत्याहारे हकारस्य पाठेन हकारग्रहणेनाकारस्य बोधेऽपि अण्प्रत्याहारे शकारस्य पाठाभावेन ग्राहकसूत्रेण शकारग्रहणेन ईकारस्याग्रहणात् । न चाचामज्भिः सह हलां हल्भिः सह सवर्णसंज्ञा न भवतीत्येव सूत्रार्थः कुतो नेति वाच्यम् नाज्झलाविति निर्देशेन मूलार्थस्यैव युक्तत्वात् । अन्यथा 'झयोहोऽन्यतरस्याम्' इत्यनेन हकारस्य पूर्वसवर्णाभावेनाऽऽज्झलाविति निर्देशस्यासङ्गतिस्स्यादिति भावः । न च, यदि अकारहकारयोः सवर्णसंज्ञा स्यात्तर्हि "अतो रोरप्लुतादप्लुते हशि" इति न्यासादेव शिवोऽर्च्य इति सिद्धौ, अतीत्येतत्सहितेन योगविभागेन विधानं व्यर्थं सत् अज्झलोः सावर्ण्याभावबोधकमिति नाज्झलाविति सूत्रं न कार्य्यमिति वाच्यम् , हभिन्ने, हसवर्णे चेदत्येवेति नियमद्वारा स्व-आगन्तेत्यादौ दीर्घाकारे उत्वव्यावृत्त्यर्थमतिग्रहणस्य कर्त्तव्यत्वात् ॥

एकारशकारयोः सवर्णसंज्ञावारणाय "नाक् शलौ" इति न सूत्रितम् । शलां परस्परं संज्ञानिषेधवारणाय "नाच्शलौ" इत्यपि न सूत्रितम् । यथा श्रुतनिर्देशे तु सूत्रे पूर्वसवर्णकरणात् मूलार्थ एव युक्त इति दिक् ॥

ननु वाक्यापरिसमाप्तिरिति न्यायो न मन्तव्यः । तथा च नाज्झलावित्यत्र ग्रहणकशास्त्रेण सवर्णग्रहणं भवतु । तस्मात् तत्र दीर्घाकारप्लुताकारप्रश्लेषो व्यर्थः 'अकः सवर्णे दीर्घः' इत्यत्राचिग्रहण-

स्यानुवर्तनमपि न कार्य्यमिति महल्लाघवमिति चेन्न नाज्झलावित्यत्र ग्रहणकशास्त्रेण इकारः सवर्णग्रहणेन यथा दीर्घादिकं गृह्णाति तथा शकारमपि गृह्णाति तथा च शकारस्य शकारेणापि सवर्णसंज्ञायाः प्रतिषेधे परश्शतानि कार्य्याणि इत्यत्र झरो झरीति सवर्णलोपो न स्यादिति स्वीकारात्। न च तत्र लोपाभावे विशेषाभाव इति वाच्यम् लकारेण सकारग्रहणे सकारेण सकारस्य सवर्णसंज्ञाप्रतिषेधे निंसे इत्यादौ सकारस्य लोपो न स्यादिति स्वीकारात्॥ १६॥

## अणुदित् सवर्णस्य चाप्रत्ययः।

### ( अत्राण् परेण णकारेण )

अत्र 'उपसर्गादृति' इति सूत्रे तपरकरणं मानम् बोध्यम्। यदि पूर्वेण णकारेणात्र गृह्यते तर्हि ऋकारस्यानण्त्वेन सवर्णाग्राहकत्वात् तपरकरणमिहानर्थकं स्यात्। यद्यप्यत्र दीर्घ-ॠकारादेर्धातोरसम्भवस्तथापि 'वा सुप्यापिशलेः' इत्यत्रोत्तरार्थं तपरकरणम्। एवञ्च तपरत्वात् उप+ॠकारीयतीत्यादौ दीर्घे न वृद्धिरिति बोध्यम्। एवं 'ऋत उत्' इत्यत्र तपरकरणं तत्र मानं बोध्यम्। तपरसूत्रेण लकारग्रहणार्थं तपरग्रहणं चरितार्थमिति चेत्तर्हि—'उर्ऋत्' इति सूत्रे तपरकरणं मानं बोध्यम्। तद्धि चुरादिण्यन्तात् कॄतधातोर्लुङि अचीकृतदित्यत्र दीर्घॠकारस्य स्थाने ह्रस्व ऋकार एव यथा स्यादित्येतदर्थम्। यदि पूर्वेण णकारेणाणात्र गृह्यते तर्हि ऋकारस्यानण्त्वेन दीर्घादीनामप्रवृत्तेः तपरकरणं व्यर्थं स्यात्। परणकारेण ग्रहणे तु ऋकारस्याण्त्वात् सवर्णग्राहकत्वात् दीर्घादेशवारणार्थं तपरकरणं स्वांशे चरितार्थम्। न च तपरसूत्रेण लकारग्रहणार्थं तदिति वाच्यम् 'स्थानेऽन्तरतमः' इति सूत्रेण प्रयोगे ऋकारस्थाने लकारस्य वारणेन तपरसूत्रेण लकारग्रहणेऽपि फलाभावात्। न चैवं ज्ञापितेऽपि भाव्यमानत्वात् सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यमिति वाच्यम्, अयमेव तकारो भाव्यमानोऽपि सवर्णग्राहको भवतीत्यर्थे ज्ञापको भवतीति स्वीकारात्। किञ्च तपरत्वाभावे ऋकारस्यानण्त्वेन सवर्णसूत्रस्यावृत्त्या अपूर्वबोध्यत्वाभावेनाविधेयत्वात् कृते तपरत्वे भाव्यमानत्वेऽपि न क्षतिरिति दिक्[1]॥ १७॥

१ अत्रत्यशब्दरत्नानुसारेणेदं लिखितम्॥

## तपरस्तत्कालस्य ।

अत्रातो भिस ऐसित्यादौ तपरकरणात् तः परो यस्मादसौ तपरः इति बहुव्रीहिसंज्ञकस्समासः । तात् परः तपरः इति पञ्चमीतत्पुरुषसमासोप्यत्र बोध्यः । तात् परः तपरः इति पञ्चमीतत्पुरुषे मानन्तु सहिवहोरिति सूत्रस्थवर्णग्रहणमेव । तद्धि—उदवोढामित्यत्र दीर्घाकारस्यौत्वसाधनार्थं कृतम्; पञ्चमीसमासाभावे 'सहिवहोरोदस्य' इति वक्तव्ये ह्रस्वाकारेण दीर्घाकारस्यापि, उदवोढामित्यत्र, ओत्वं सिद्धं वर्णग्रहणं व्यर्थं सत् पञ्चमीसमासे ज्ञापकं बोध्यम्, कृते च पञ्चमीसमासे उदवोढामित्यत्र वर्णग्रहणसामर्थ्यादोत्वं भवतीति भाष्यकृताऽपि वर्णग्रहणसामर्थ्यादुदवोढामित्यत्रौत्वसाधनेन ध्वनितोऽयं समासः । अतएव 'एओङ्' इति सूत्रभाष्ये कण्ठरवेण समासद्वयस्य प्रतिपादनं कृतमिति । न च पञ्चमीसमासे 'ऋदोरप्' इति सूत्रे ह्रस्वोकारस्य ग्रहणे यवः, स्तव इत्येव स्यात् न तु लवः, पव इति दीर्घे इति वाच्यम् ऋदोरवित्यादौ दकार एवेति स्वीकारात् ॥

न चाद्गुण इति सूत्रे विभक्तितकारे तपरसूत्रप्रवृत्त्या उपेन्द्र इत्यादौ गुणो न स्यादिति वाच्यम् उपसर्गादिति सूत्रे उपसर्गादृिति विभक्तितकारादेव लृकारग्रहणसिद्धौ पुनरपि ऋदिति तपरकरणेन तपरसूत्रे विभक्तितकारस्य ग्रहणबोधनात् । अतएवोपेन्द्र इत्यादौ गुणः सिद्ध्यतीति दिक् ॥ १८ ॥

## भूवादयो धातवः ।

भूश्च वाश्च भूवाविति द्वन्द्वः, आदिश्च आदिश्च आदी इति द्वन्द्वं बाधित्वा एकशेषः, भूवावादी येषान्ते भूवादयः । यद्यपि सामीप्ये व्यवस्थायाम्, प्रकारे, अवयवे चार्थे आदिशब्दस्य शक्तिस्तथाप्यत्र बहुलक्ष्यसंस्कारानुरोधेन, भाष्यप्रामाण्येन च व्यवस्थाप्रकारवाचिनोरादिशब्दयोर्ग्रहणम् तथा च व्यवस्थावाचिनि आदिशब्दे भूशब्दस्यान्वयः, प्रकारवाचिनि आदिशब्दे वाशब्दस्यान्वयः । भूप्रभृतयो वासदृशा इति तदर्थः । सादृश्यञ्च क्रियावाचित्वेनेति तदाह–'क्रियावाचिनः' इति । न च मिलितस्यैकत्रान्वयाभावेन साहित्याभावात् भूवाशब्दयोर्द्वन्द्वःआदिशब्दयोरेकशेषश्च न स्यादिति वाच्यम्, आद्यन्तौ टकि-

तावित्यत्र यथा साहित्यावच्छिन्नस्य साहित्यावच्छिन्नेऽन्वयं कृत्वा पश्चात् यथासंख्यसूत्रारम्भसामर्थ्यात् पृथगन्वयो भवति तथैवात्रापि मिलितस्य भूवाँशब्दस्य आदी इति समुदायेऽन्वयं कृत्वा पश्चात् यथासंख्यसूत्रेण भूशब्दस्य व्यवस्थावाचिनि प्रथमादिशब्देऽन्वयः वाशब्दस्य द्वितीयप्रकारवाचिनि आदिशब्देऽन्वय इति स्वीकारात्। न च सादृश्यप्रतियोगितावच्छेदकधर्मं सर्वत्र व्यापकधर्मेणैव गृह्यत इति अत्रापि वात्वव्यापकासत्त्ववाचित्वेनैव सादृश्याश्रयणे क्रियावाचिन इत्यर्थानुपपत्तिरिति वाच्यम्, वासाहचर्य्यादसत्त्ववचनस्य भुवो ग्रहणम् असत्त्ववचनभूसाहचर्य्यात् क्रियावाचिनो वाशब्दग्रहणम् क्रियावाचिवासादृश्यस्य क्रियावाचित्वेन ग्रहणमिति परस्परसाहचर्य्येण क्रियावाचिन इत्यर्थोपपत्तेः। एतेनात्र यद्यपि वा इत्यस्य हलादित्वम्, एकाच्त्वम्, अजन्तत्वम्, आदन्तत्वमस्ति तथापि ऊर्णोतेर्विभाषा, वदव्रज इति सूत्रसामर्थ्यात् तत् तत् धर्मेण सादृश्यं न गृह्यत इत्याशङ्कासमाधाने निरस्ते भवतः न चैकेनादिशब्देनोपस्थित्योर्व्यवस्थाप्रकारयोः भूवाशब्दस्यान्वये क्रियावाचिग्रहणं लब्धमेकमादिग्रहणं न कार्य्यमिति वाच्यम्, तथा सति क्रमिकत्वाभावेन यथासंख्यसूत्रविषयाभावात् भूशब्दस्य व्यवस्थायामेव वाशब्दस्य प्रकार एवान्वय इत्यत्र प्रमाणाभावेन कदाचित् विपरीतान्वयापत्तेः। न चैवं वाशब्दे वाशब्दप्रतियोगिकभेदाभावात् वा इत्यस्य धातुत्वं न स्यादिति वाच्यम् अनादिभूतवाति, वात इति प्रयोगमाश्रित्य धातुत्वस्योक्तत्वात्। अत्र भूश्च भूश्च भूवौ आदिश्च आदिश्च आदी भूवावादी येषान्ते भ्वादय इति न्यासेन यद्यपि पूर्वोक्तार्थलाभस्तथापि वाशब्दस्य मंगलार्थत्वमिति भाष्य उक्तमिति॥

नन्वत्र क्रियावाचिग्रहणप्रतिपादकं वाग्रहणं द्वितीयमादिग्रहणञ्च न कार्य्यमिति चेन्न क्रियावाचिग्रहणाभावे याः पश्यसीत्यत्र या अस् इत्यवस्थायाम् या इत्यस्य भ्वादिगणपठितत्वेन धातुत्वे 'आतो धातोः' इत्यनेनाकारस्य लोपापत्तेः। न च धातुसंज्ञायां लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्त या इत्यस्यैव ग्रहणं स्यान्न तु लाक्षणिक याः, इत्यस्य धातुत्वमिति वाच्यम् भ्वादिषु लाक्षणिकानामपि ग्रहणात्, नकारजावनुस्वारपञ्चमौ झलि धातुष्विति भाष्योक्तेः। न च धातुसंज्ञायामपि 'आतो धातोः' इत्यनेनालोपे कर्त्तव्ये स्त्र्यर्थनिमित्तकबहि-

रङ्गस्य टापोऽसिद्धत्वान्न दोष इति वाच्यम् भसंज्ञादिवहुनिमित्तकत्वेन लोपस्यैव वहिरङ्गत्वात्, कृतवहिरङ्गत्वस्यानाश्रयणाच्च । न च आतो धातोरित्यत्र प्रतिपदोक्ताकारस्य ग्रहणेन नात्र दोष इति वाच्यम् विड्वनोरित्योत्वनिष्पन्नस्य पशुं सुनोतीति पशुष इति भाष्यप्रयोगे 'आतो धातोः' इत्याकारलोपेन वर्णग्रहणेन तस्याः अप्रवृत्तेः । अन्यथा लाक्षणिकत्वेनात्राकारलोपो न स्यात् । न च 'आतो नापः' इति वार्तिकेणाब्भिन्नाकारस्यातो धातोरित्यनेन लोपे क्रियावाचिग्रहणाभावे पूर्वोक्तलक्ष्ये न दोषः वार्तिकप्रत्याख्यानपक्षेऽपि योगविभागादेवेष्टसिद्धिरिति वाच्यम् क्रियावाचिग्रहणाभावे विकल्पार्थकनिपातवाशब्दस्य धातुसंज्ञायाम् प्रातिपदिकत्वाभावात् सुबभावे पदत्वानापत्तेः । तथा च वाकरोतीत्यत्र 'तिङतिङः' इति सूत्रेणानुदात्तो न स्यात् वाशब्दस्य चादिगणे पाठारम्भसामर्थ्यात् धातुत्वं न वार्य्यते अकजर्थपाठस्य चारितार्थ्यात् न च क्रियावाचिन इत्युक्तावपि वातीति प्रयोगः कथं नेष्ट इति वाच्यम् वार्थविकल्पे भूतभविष्यत्कालसम्बन्धाभावेन क्रियात्वाभावात् ॥ १९ ॥

## सुप्तिङन्तम् पदम् ।

तिङ्साहचर्य्येण, न ङिसम्बुद्ध्योरिति सूत्रसामर्थ्येन वा 'सुप्' इत्यनेनात्र सुपः पकारेण सुप् प्रत्याहारो गृह्यते न तु सप्तमीवहुवचनमात्रस्य ग्रहणं भवतीति वोध्यम् । ननु सुप् इत्यनेन सुपः पकारेण सुप्प्रत्याहारो न ग्राह्यः किन्तुव्याप्तिन्यायात् कपः पकारेण सुप् प्रत्याहारो ग्राह्यः । न च सुपः पकारोच्चारणसामर्थ्यात् तेनैव प्रत्याहार इति वाच्यम् तस्य रोःसुपीत्यत्र ग्रहणार्थत्वात् । न च तिङ्साहचर्य्यादेकसूत्रोपात्तिपकारेण सुप् गृह्यत इति वाच्यम् यङः ष्यङः ङकारेण कथं न तिङ्प्रत्याहारो गृह्यत इति तत्रापि विवादत्वेन साहचर्य्याश्रयणस्याभावादिति चेन्न स्वादिष्विति सूत्रे सुपीति वाच्ये स्वादिग्रहणसामर्थ्यात्, प्राग्दिशो विभक्तिरिति सूत्रसामर्थ्याच्च सुपः पकारेणैव सुप्प्रत्याहारस्य ग्रहणात् । न च सुप् इत्यनेन टापः पकारेण सुप् प्रत्याहारो ग्राह्य इति वाच्यम्, सुपः पकारस्यैकसूत्रोपात्तत्वेन प्रत्यासन्नत्वात्, प्रथमोपस्थितत्यागे मानाभावेन च सुपः पकारेणैव सुप्प्रत्याहारस्य ग्रहणात् ॥ अत्रान्तं ग्रहणं संज्ञाविधाविति परिभाषायाम् ज्ञापकमित्यादिव्याख्यानन्तु अन्यत्र द्रष्टव्यमिति दिक् ॥ २० ॥

# इको गुणवृद्धी।

इक इति इक्शब्दप्रकृतिकषष्ठ्येकवचनान्तस्यानुकरणम् शब्दस्वरूपपरतया प्रथमैकवचनान्तम् नपुंसकम्, नपुंसकात् सोर्लुक् अन्यथा 'अत्वसन्तस्य' इति सूत्रेण दीर्घादेशः स्यात्।

गुणश्च वृद्धिश्च गुणवृद्धी, वृद्धिशब्दस्यघित्वेऽपि पूर्वनिपातो न अस्मादेव निर्देशात् 'लक्षणहेत्वोः' इत्यादि निर्देशाच्च पूर्वनिपातस्यानित्यत्वात्। अत्र पूर्वसूत्रात् गुण इति वृद्धिरिति चानुवर्तते, उचितार्थाधिकारानुरोधेन तौ चानुवर्त्तमानौ गुणवृद्धिशब्दौ शब्द (संज्ञा) परौ। 'स्वादिषु' इति सूत्रेऽनुवृत्तपदपदस्य संज्ञापरताया एव दृष्टत्वात् यथा 'सुप्तिङन्तम्' इति सूत्रात् पदपदम् 'स्वादिषु' इति सूत्रेऽनुवर्तते तच्चानुवर्तमानं पदपदम् शब्दपरन्न संज्ञिपरम् असम्भवात्, तथेहापि बाधकाभावात् अनुवर्तमानं गुणवृद्धिग्रहणं शब्दपरमिति भावः। न च संज्ञासूत्रादनुवर्तमानसंज्ञापदस्यार्थाधिकारानुरोधाच्छब्दस्वरूपपरत्वाङ्गीकारे ष्णान्तेति सूत्रेऽनुवर्तमानसंख्यापदस्यापि तथात्वापत्तिःस्यादिति वाच्यम् तत्सूत्रे संख्यापदस्य षान्तत्वनान्तत्वसम्भवेनार्थपरत्त्वात्। न चैवं संज्ञाकरणेनान्यत्र संज्ञिपरत्वमिति नियमविरुद्धः स्यादिति वाच्यम् संज्ञाशास्त्राद् यत्र संज्ञापदमनुवर्तते तद्भिन्नस्थले एव संज्ञिपरत्वमिति 'संज्ञाकरणेनान्यत्र संज्ञिपरत्वम्' इत्यस्यार्थात्। तथा च—शब्दपरं गुणवृद्धिग्रहणमत्रानुवर्त्य 'गुण इत्येवं यो गुणो वृद्धिरित्येवं या वृद्धिः' इति योजनया गुण इति शब्दमुच्चार्य्य यत्र गुणस्य विधानम् वृद्धिरिति शब्दमुच्चार्य्य यत्र वृद्धेर्विधानम् तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थो निःसृतः। अत्रेदं तत्त्वम—इति, एवमित्यध्याह्रियते तस्य च प्रत्येकमन्वयः, उच्चार्य्य इति शेषः तस्य च विधानेऽन्वयः, अतो द्वन्द्वासाधुत्वशङ्काऽपि न यत्र, विधीयेते, तत्र, उपतिष्ठते इत्येतानि पदानि चाध्याह्रियन्ते। एवञ्च—गुणवृद्धिशब्दाभ्याम्= शास्त्रे उच्चारिताभ्याम् यत्र गुणवृद्धी विधीयेते=विधीयतयोच्चार्येते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इति सूत्रार्थः निष्कर्षस्तदाह मूले—'गुणवृद्धिशब्दाभ्याम्' इत्यादि। तेन 'त्यदादीनामः' 'दिव औत्' इत्यादौ गुणशब्दमुच्चार्य्य गुणस्य विधानाभावेन नास्याः उपस्थितिः अन्यथा इक्पदोपस्थित्याः तत् तत् प्रयोगाणां सिद्धिर्न स्यात्। विधीयत इत्यस्याध्याहारात् गुणशब्दमुच्चार्य्य यत्र गुणस्य विधानमित्यर्थेन

'वृद्धिर्यस्याचामादिः' 'अतो गुणे' इत्यादौ नास्याः प्रवृत्तिः । विधीयत इत्यध्याहारमूलक एव 'विधौ परिभाषोपतिष्ठते नानुवादे' इति प्रवाद इति, प्राञ्चः ॥

केचित्तु, अत्र पूर्वसूत्राभ्यामदेङ्पदमादैच्पदञ्चानुवर्त्य यत्रेमे विधीयन्ते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थेनैव सिद्धे पुनरस्मिन् सूत्रे गुणवृद्धिग्रहणं व्यर्थीभूय ज्ञापयति— एतत्सूत्रघटकगुणवृद्धिशब्दः शब्दपरः अनेनैव गुणवृद्धिशब्दाभ्यामिति मूलोक्तं फलितम् "अर्थाधिकारात् पूर्वसूत्राभ्यां संज्ञाबोधकगुणवृद्धिपदे अनुवर्त्य गुणो यो गुणो वृद्धिर्या वृद्धिरिति योजनया गुणवृद्धिशब्दाभ्यामिति मूलोक्तार्थस्य लाभः' इति प्राचीनोक्तं व्याख्यानं न युक्तमिति वदन्ति तन्न युक्तम् "गुणवृद्धिग्रहणमनुवर्तते, अदेङादैज्ग्रहणं निवृत्तम्" इत्यत्रत्यभाष्यदर्शनात् अस्मिन् सूत्रेऽदेङादैच्पदस्यानुवर्तनं भाष्यविरुद्धमिति स्वीकारात् । तस्मात् लाघवायास्मिन् सूत्रे संज्ञापरके गुणवृद्धिग्रहणे अनुवर्त्य प्राचीनोक्तयोजनाकल्पनमेव युक्तमिति बोध्यम् ।

अन्ये तु, शब्दाधिकारात् ष्णान्ताः षडितिवदिहापि संज्ञिपरकगुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे सामर्थ्यात् सूत्रस्थगुणवृद्धिशब्दो गुणवृद्धिशब्दबोध्याकारादौ लाक्षणिकः । तथा च— गुणपदावच्छिन्नविधेयताप्रयोजकं गुणपदम्, वृद्धिपदावच्छिन्नविधेयताप्रयोजकं वृद्धिपदं वा यत्रास्ति तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इति फलितार्थेनैव सर्वेष्टसिद्धौ प्राचीनोक्तयोजनाप्रकारो निष्फल इति वदन्ति तदपि न युक्तम् तत्तत्सूत्रे लक्षणाश्रयणं गौरवमिति तदपेक्षया लाघवात् योजनाप्रकारस्यैवौचित्यात् ।

नव्यास्तु, पूर्वसूत्राभ्यां गुणवृद्धिग्रहणमत्रानुवर्तते अनुवर्तमानञ्च गुणवृद्धिग्रहणं शब्दाधिकारात् संज्ञि (अर्थ) परम् 'ष्णान्ताः षट्' इति सूत्रेऽनुवृत्तसंख्यापदस्य संज्ञिपरताया एव दृष्टत्वात् यथा ष्णान्ताः षडित्यत्रानुवृत्तसंख्यापदं संज्ञिपरम् तथैवात्राप्यनुवृत्तगुणवृद्धिग्रहणं शब्दाधिकारात् संज्ञिपरमेव स्यादिति भावः । तथा च यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थेनैव सिद्धे पुनरस्मिन् सूत्रेऽधिकं गुणवृद्धिग्रहणं व्यर्थं सत् सूत्रस्थगुणवृद्धिशब्दः शब्दपर इति ज्ञापयतीत्याशयेनाह मूले-गुणवृद्धिशब्दाभ्यामिति आहुः परमेतदपि न विचारसहम् अत्र स्वादिष्विति यत् उचितार्थाधिकारस्य

बल्येन शब्दाधिकारस्यानाश्रयणादनुवर्तमानस्य गुणवृद्धिशब्दस्य संज्ञिपरत्वाभावेन सूत्रस्थगुणवृद्धिपदस्य सामर्थ्याभावेन गुणवृद्धिशब्दस्याशब्दपरत्वाभावात्। शब्दाधिकारेऽनुवृत्तयोर्गुणवृद्धिपदयोः संज्ञिपरत्व एव सूत्रस्थगुणवृद्धिग्रहणस्य सामर्थ्यकल्पनं युक्तम्, अनुवृत्तयोः गुणवृद्धिपदयोः संज्ञापरत्वे तु सामर्थ्याभावेन प्राचीनोक्तयोजनाप्रकारेणैव तल्लाभ इति भावः। ष्णान्ताःषडित्यत्रासम्भवात् संख्यापदस्यार्थपरत्वं भवत्येवेत्यन्यदेतत्। न चात्र पूर्वसूत्राभ्यां संज्ञापरे गुणवृद्धिपदे अनुवर्त्य योजनयोक्तार्थलाभ इति प्राचीनोक्तं व्याख्यानम् "गुणवृद्धिग्रहणसामर्थ्यात्" इति प्रकृतसूत्रस्थभाष्यविरुद्धं तस्मात् सामर्थ्यात् गुणवृद्धिशब्दः शब्दपर इति भाष्यसम्मतं नवीनोक्तं व्याख्यानमेव युक्तमिति वाच्यम् तद्भाष्यस्यैकदेश्युक्तित्वेन सामर्थ्यकल्पनायां प्रमाणाभावात् अतः "संज्ञाविधाने नियमः" इत्येतत् भाष्यप्रामाण्येन संज्ञावाचके गुणवृद्धिपदे अनुवर्त्य प्राचीनोक्तयोजनाप्रकारस्यैव युक्तत्वमित्यस्माकं मतमिति। अतएवात्रत्यशेखरे सामर्थ्यात् गुणवृद्धिशब्दः शब्दपर इति पक्षस्यावहेलनं कृत्वा योजनाप्रकारमेव तदप्यनुवर्त्य इत्यनेन सिद्धान्तितमिति दिक्॥

## इको गुणवृद्धी।

ननु इदं सूत्रं न कार्य्यम्। न च सूत्राभावे गुणविधायके 'पुगन्तलघूपधस्य च' इत्यादौ इक इत्यस्यानुपस्थित्या पुगन्तलघूपधाङ्गावयवस्य गुणस्स्यादित्यर्थे पचतीत्यादौ ह्रस्वाकारस्य ह्रस्वाकारगुणे यद्यपि विशेषाभावस्तथापि पच्धातोः लिटि थलि पेचिथेत्यादौ गुणे कृते गुणशब्देन भावितत्वात् 'न शसददवादिगुणानाम्' इत्यनेनैत्वाभ्यासलोपौ न स्यातामिति वाच्यम् थलि चेति सूत्रारम्भसामर्थ्येनात्रैत्वाभ्यासलोपौ भवत इति स्वीकारात्।

न च सूत्राभावे वृद्धिविधायके 'चिसि,वृद्धिः' इत्यादौ इक इत्यस्यानुपस्थित्या अङ्गस्य वृद्धिस्स्यादित्यर्थे अयासीदित्यादौ दीर्घाकारस्य दीर्घाकारवृद्धौ यद्यपि विशेषाभावस्तथापि गौरिवाचारीद् अगवीदित्यत्र सिचि वृद्धौ अगावीदित्यनिष्टं स्यादिति वाच्यम् पजन्तेभ्य आचारक्विपोऽनभिधानात्।

न च सूत्राभावे याता, वातेत्यादौ 'सार्वधातुकार्द्धधातुकयोः' इत्यनेन दीर्घाकारस्य स्थाने ह्रस्वाकारगुणे यता, वतेति स्यादिति वाच्यम् 'आतोऽनुपसर्गे कः' इति सूत्रे ककारग्रहणेन दीर्घाकारस्य गुणो न भवतीति ज्ञापनात् । अन्यथा 'आतोऽनुपसर्गाद् अ' इति वक्तव्ये अकारे परे आकारस्य गुणादेशे द्वयोरकारयोः पररूपेण गोदः कम्बलद इत्यादीनां सिद्धावाकारलोपार्थं कृतं ककारग्रहणं व्यर्थं स्यात् । 'तुन्दशोकयोः परिमृजापनुदोः' इत्यत्रानुवृत्त्यर्थं ककारग्रहणमिति चेत्तर्हि 'गापोष्टक्' इति सूत्रे ककारग्रहणमाकारस्य गुणाभावे ज्ञापकमिति बोध्यम् । न च सूत्राभावे ग्लायति, म्लायतीत्यादावैकारस्य एकारगुणादेशः स्यादिति वाच्यम् ऐकारोच्चारणेन सन्ध्यक्षरस्य गुणादेशो न भवतीति ज्ञापनात् । अन्यथा एकार एव वक्तव्ये ऐकारोच्चारणं व्यर्थं स्यात् । न चैकारोच्चारणेन यथा गुणः वार्य्यते तथैवायादेशः कथं न वार्य्यत इति वाच्यम् यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नास्ति नासौ बाध्यत इति ज्ञापनात् । न च सूत्राभावे उम्भितेत्यादावानन्तर्य्यतोऽर्धमात्रिकस्य व्यञ्जनस्य, मात्रिकोऽकारो गुणादेशस्स्यादिति वाच्यम् 'सप्तम्याञ्जनेर्डः' इति सूत्रे डकारग्रहणेन व्यञ्जनस्य गुणो न भवतीति ज्ञापनात् ॥ अन्यथा 'सप्तम्याञ्जनेरः' इति वक्तव्ये आकारे परे नकारस्य अकारे गुणे कृते त्रयाणामकाराणाम् पररूपेण सरसिजमित्यादीनां सिद्धौ टिलोपार्थं डकारग्रहणमनर्थकं स्यात् । नकारस्यानुनासिकाकारे गुणेऽपि पररूपेण शुद्धो भविष्यतीति ।

न च 'अन्तात्यन्ताध्व……'इति सूत्रोपरि 'सुदुरोरधिकरणे' इति वार्त्तिकेऽनुवृत्त्यर्थं डकारग्रहणं चरितार्थमन्यथा गम्धातोर्मकारस्यौष्ठस्थानिकत्वेन ओकारगुणादेशे सुगः, दुर्ग इत्यादीनां सिद्धिर्न स्यादिति वाच्यम् तत्र तु 'अन्तात्य……' इति सूत्रात् डकारस्यानुवृत्तेः । व्यञ्जनस्य गुणाभावे तु सप्तम्याञ्जनेर्ड इति सूत्रस्थडकारग्रहणं ज्ञापकं बोध्यमिति चेन्न सप्तम्याञ्जनेरित्युत्तरं पठिते 'अन्येष्वपि दृश्यते' इति सूत्रे दृशिग्रहणं सर्वोपाधिव्यभिचारार्थं तेनैव धात्वन्तरादपि डप्रत्यये सुगः नग इत्यादीनां सिद्धौ 'अन्तात्यान्ताध्व……' इति सूत्रस्थवार्तिकं प्रत्याख्यातमिति स्थितिः तथा च तत्रानुवृत्त्यर्थं डकारग्रहणस्य चारितार्थ्यात् । अन्यथा स्थानतः आनन्तर्य्यात् मकारस्य औकारगुणादेशे सुगः नग इत्यादीनां सिद्धिर्न स्यात् अतः डकारग्रहणं कर्तव्यमेव । न च गमे-

ञिचि एव सिद्धे 'गमेर्डो' इत्यनेन गमधातोर्डो प्रत्ययविधानेन भकारस्य ओकारगुणेन भवतीति वाच्यम् विचि सति सानुनासिक ओकारो गुणःस्यात् निरनुनासिक ओकारसिद्धये डोप्रत्ययस्य विधानात्। न च 'तनोतेर्ड उसन्वच्च' इति डित्करणान्न व्यञ्जनस्य गुण इति वाच्यम् उणादिनामव्युत्पन्नत्वेन ज्ञापकत्वासम्भवात्। तथा च व्यञ्जनस्य गुणवारणार्थं सूत्रं कर्त्तव्यमेव। किञ्च सूत्राभावे भिन्नमित्यादौ इकलक्षणत्वाभावेन क्ङिति च इत्यस्य प्रवृत्तिर्न स्यात् तथा च तत्र निषेधप्रवृत्तये सूत्रस्य कर्त्तव्यत्वात्। न च क्तोः कित्त्वेनानिग्लक्षणस्यापि निषेधात् भिन्नमित्यादौ न दोष इति वाच्यम् सामान्यतः निषेधस्वीकारे तु सैगवायन इत्यादावपि 'तद्धितेष्वचामादेः' इत्यनेन प्राप्ताया अपि वृद्धेर्निषेधापत्तेः। न च गित् साहचर्य्यात् क्ङितोरपि धात्वधिकारयोरेव ग्रहणान्न सैगवायन इत्यत्र दोष इति वाच्यम् अनिग्लक्षणस्यापि निषेधे कामयत इत्यादौ क्ङिति चेति निषेधात् 'अत उपधायाः' इत्यनेन वृद्धिर्न स्यात् तथा च तत्र निषेधाभावाय 'इको गुणवृद्धी' इति सूत्रस्य कर्त्तव्यत्वादिति दिक् ॥२१॥

## ङिच्च।

ननु 'ङिच्च' इति सूत्रं न कार्य्यम्। न च ङिच्चेति सूत्राभावे 'अनङ् सौ' इत्यदावनङः अनेकाल्त्वात् 'अनेकाल् शित्' इति सूत्रेण सम्पूर्णसखिशब्दस्य स्थानेऽनङादेशे कृते सखेत्यस्य सिद्धिर्न स्यादिति वाच्यम्, अनन्यार्थङित्त्वेष्वनङादिषु ङकारोच्चारणसामर्थ्यादेवानेकालित्यस्याप्रवृत्त्या अन्त्यस्यालोऽनङादेशो भवतीति स्वीकारात्। अन्यथा ङकारोच्चारणमन्तरापि अनस्यानेकाल्त्वात् सर्वादेशतायाः सिद्धत्वात् ङकारग्रहणं व्यर्थं स्यात्। तथा चान्त्यादेशार्थङकारोच्चारणमेव भविष्यति ङिच्चेति सूत्रं न कार्य्यमिति चेन्न न्यायसिद्धबाधकस्य ङकारोच्चारणस्यैवानुवादकं ङिच्चेति सूत्रं न त्वपूर्वविधायकमिति स्वीकारात्। तथा च अनन्यार्थङित्त्वेष्वेव ङिच्चेति सूत्रस्य प्रवृत्तिः तातङो ङकारस्य तु गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया कृतार्थत्वेन न तातङि ङिच्चेति सूत्रस्य प्रवृत्तिः अतो नानेकालित्यस्य तत्र बाधः। न च गुणवृद्धिप्रतिषेधार्थत्वे एव सर्वादेशत्वम्, सर्वादेशत्वे गुणवृद्धिप्रतिषेधार्थत्वम्, अन्त्यादेशत्वे तु अप्रत्ययत्वेन न गुणवृद्धिप्रतिषेधार्थत्व-

मित्यन्योन्याश्रयात् सर्वादेशत्वालाभे अन्त्यादेशत्वमेव स्यादिति वाच्यम्। 'एरुः' इति सूत्रस्यानन्तरम् 'तिह्योस्तात्' इति सूत्रं कर्त्तव्यम्, एरुरित्यतः एरित्यनुवर्त्य तिह्योरिकारस्य तादित्यर्थेनाप्यन्त्यादेशत्वसिद्धौ ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वबोधनद्वारा सर्वादेशत्वे

सिद्धौ ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वबोधनद्वारा सर्वादेशत्वे-

नादोषादिति दिक्[1] ॥२२॥

## आदेः परस्य।

ननु लाघवात् "तस्मादित्युत्तरस्यादेः" इत्येव न्यासः कार्य्यः आदेः परस्येति पृथक् सूत्रं न कार्य्यमिति चेन्न एवं कृते अनेकाल् शिदित्यनेन पूर्वोक्तन्यासस्य परत्वाद्बाधानापत्त्या, अष्टन्शब्दाज्जसः आदेरेव औशादेशे विभक्तिसकारस्य विसर्गे अष्टौः, इत्यनिष्टं स्यात्, सिद्धान्ते तु आदेः परस्येत्यपेक्षया अनेकालशिदित्यस्य परत्वादनेन तस्य बाधे जसः औशादेशो भवतीति स्वीकारात्। उक्तन्यासस्य अनेकाल्शिदित्यतः प्राक् पाठस्तु न कार्य्यः, तस्मादित्युत्तरस्येतिवत् पूर्वोक्ते न्यासस्याप्यागमविषये प्रवृत्त्या आज्जसेरसुगित्यनेन जसः अकारस्यासुगागमे जसः सकारस्य संयोगान्तलोपे देवाः ब्राह्मणा इति स्यादिष्टे तु देवासः ब्राह्मणास इति स्वीकारात्। आज्जसेरसुडिति न्यासेन सिद्धावपि, अश्वक्षीरवृषलवणानामित्यनेनासुडागमे अश्वस्यतीत्यादीनामसिद्धेः। क्यचोऽसुड्विधाने तु क्यचि चेत्यनेनेत्वं स्यात्। क्यच्यसुगिति न्यासे तु लाघवाभाव इत्यभिप्रेत्य मूले-अष्टाभ्य औशित्यादावादेः परस्येतः इति ॥ २३ ॥

## उरण्रपरः।

ननु "उरण्रपरः" इदं सूत्रं न कार्य्यम्। "ऋत इत्, उदोष्ठ्यपूर्वस्य" इत्यादौ सर्वत्र तकारस्थाने रेफ एवोच्चारणीयः। 'अरलदेङ्गुणः, वृद्धिरारालादैच्' इति न्यासेन सर्वेष्टसिद्धिः। 'भृञामित्' इत्यत्रापि रेफ एवोच्चारणीयो रेफस्य हलादिः शेषेन निवृत्तिरिति चेन्न, ईर्त्संतीति सिद्ध्यर्थम् 'आप्ज्ञाप्यृधामीत्' इति सूत्रे ईर् इति पाठे ईप्सति, ज्ञीप्सतीत्यादीनामसिद्ध्यापत्तेः। तस्मात् सूत्रं कर्त्तव्य-

1 तिङन्ते भवतादित्यादौ ङिच्च इत्यनेन कथं नान्तादेश इति प्रश्नेऽपि-इदमुत्तरं बोध्यमिति।

मेवेति॥ न च 'उरण्रग्' इत्येव सूत्रमस्तु उःस्थाने योऽण् तस्य प्रसङ्गावस्थायां रगागम इत्यर्थ इति वाच्यम् चाकरीतीत्यादावभ्यासस्योरदित्त्वे तस्य रगागमेऽभ्यासस्य कित्त्वाद् दीर्घोऽकित इति दीर्घानापत्तेः॥ वस्तुतस्तु–'उरण्रम्' इत्येव सूत्रयितुमुचितम् = उःस्थाने योऽण् तस्य प्रसङ्गावस्थायां रमागम इत्यर्थ इति दिक्॥ २४॥

## एत्येधत्यूठ्सु।

नन्विदं सूत्रं न कार्य्यम् तत्स्थाने लाघवात् "ठिति च" इत्येव सूत्रमस्तु अवर्णात् ठिति परे वृद्धिरेकादेशस्स्यादिति तदर्थः।

न च ठिति चेति न्यासे विश्वौहः, प्रष्ठौहः इत्यादीनां सिद्धावपि प्रैधते, उपैतीत्यादौ ठित्त्वाभावात् वृद्धिर्न स्यादिति वाच्यम् तत्र तत्रैधठ्वृद्धौ इठ्गताविति पाठेन निर्वाहात्। न च यथोक्तसूत्रे प्रेत इत्यादौ वृद्धिर्न भवति भवन्न्यासे वृद्धिः स्यादिति वाच्यम् तत्र वृद्धिरेचीत्यतः एचिपदसम्बन्धेन एजादिठिति परे वृद्धिः स्यादित्यर्थकरणेनादोषात्। न चैचीति संबन्धे विश्वौहः प्रष्ठौहः इत्यादावेजादिठित्वाभावात् वृद्धिर्न स्यादिति वाच्यम् यत्र वाह ऊठिति सूत्रं तत्र "वाह ओठ्" इति न्यासेनादोषात्। न च वाह ओठिति न्यासे इक्प्रत्याहारे ओकारस्य पाठाभावेन सम्प्रसारणसंज्ञाभावेन सम्प्रसारणाच्चेत्यनेन पूर्वरूपाभावेन वृद्धौ सत्यां पश्चादेचोऽयादेशेन प्रष्ठौह इत्यस्य सिद्धिर्न स्यादिति वाच्यम्। 'इच्यणः सम्प्रसारणम्' इति न्यासेन क्षत्यभावात्। न च 'वाह ओठ्' इति न्यासे वार्य्यूह इत्यादीनां सिद्धिर्न स्यादिति वाच्यम् असिद्धबहिरङ्गमन्तरङ्गे इति परिभाषाज्ञापनपरभाष्यप्रामाण्येन वार्य्यूह इत्यादीनामनभिधानात्। न च 'वाह ओठ्' इति न्यासे प्रष्ठौह इत्यादौ ऊठिदमित्यनेन शसादिविभक्तिरुदात्ता न स्यादिति वाच्यम् ओठिदमिति न्यासेनादोषात्। न चैचीति सम्बन्धे एधादिठिति परे वृद्धिः स्यादित्यर्थे च्छ्वोःशूठिति सूत्रात् ऊठित्यनुवर्त्य ज्वरत्वरेति सूत्रेणोठि जनावित्यादौ एजादिठित्वाभावेन वृद्धिर्न स्यादिति वाच्यम्, च्छ्वोः शूठिति सूत्रेपि ओठिति पाठेनादोषात्। न च तत्र ओठिति पाठे अक्षद्यूरित्यस्यासिद्धिरिति वाच्यम् ज्वरत्वरेति सूत्रे ओठिति न्यासेनादोषात्। न च ठिति चेति न्यासे एचिति सम्बन्धे खवृधातोः च्छ्वोःशूठिति ऊठि खौनातीत्यादौ एजादित्वाभावात् वृद्धिर्न

स्यात् तत्रौठिति पाठे तु अक्षय्यूरित्यस्यासिद्धिरिति वाच्यम् ऊठः ठित्त्वसामर्थ्यात् एजादित्वाभावेपि तत्र वृद्धिसिद्धेः। ठिति चेति न्यासे एचीति सम्बन्धे विश्वौहः प्रष्ठौह इत्यादावपि ऊठः ठित्त्वसामर्थ्यैनैजादित्वाभावेपि वृद्धिसिद्धिः। न चोठिदमित्यत्र विशेषणार्थत्वेन विश्वौह इत्यादौ स्वरार्थमूठः ठित्त्वमिति वाच्यम् वाह ऊठिति सूत्रस्थभाष्यपर्य्यालोचनया, अन्तरङ्गपरिभाषाज्ञापकपरभाष्यस्वारस्येन च विश्वौह इत्यादौ ऊठिदमिति स्वराप्रवृत्तेः। अतएव भाष्यकृतोठ्ग्रहणाभावे स्वरांशे दोषो नोद्भावित इति चेन्न ठिति चेति न्यासे मात्रालाघवसत्त्वेपि अनेकक्लिष्टकल्पनापेक्षया यथोक्तसूत्रमेव रमणीयमिति स्वीकारात्॥ २५॥

## पार्श्वम्।

पर्शुशब्दात् णसि णकारसकारेत्संज्ञायाम् वृद्धौ पार्शु × अ इत्यवस्थायाम् 'सिति च' इति सूत्रेण पदसंज्ञायाम् भत्वाभावेन 'ओर्गुणः' इति गुणो न भवति, सिति चेति वार्तिकनिषेधात् 'इकोऽसवर्णे' इति प्रकृतिभावश्च न भवति अतः इको यणचीति यणादेशे पार्श्वम् इति सिद्धम् भवति॥

न च 'पर्श्वाणस्' इत्यस्य स्थाने पर्श्वाद्वणिति न्यासे टिलोपे वृद्धौ पार्श्वमित्यस्य सिद्धौ 'सिति च' इति सूत्रम्, फलितार्थभूतम् 'सिति च' वार्तिकमपि तकार्य्यमिति वाच्यम् तन्न्यासे तत्र निर्वाहेऽपि 'भवतष्ठक्छसौ' इति विहिते छसि प्रत्यये सिति चेति सूत्राभावे पदसंज्ञाया अभावेन तत्र जश्त्वाभावेन भवदीय इत्यस्य सिद्धिर्न स्यादिति कर्त्तव्यमेतत्सिति चेति सूत्रमिति स्वीकारात्। ऋतुप्राप्तावस्येति विग्रहे 'छन्दसि घस्' इति सूत्रेण ऋतुशब्दात् घस् तस्येयादेशे सिति चेति सूत्रेण पदसञ्ज्ञायामोर्गुण इति गुणाभावे ऋतु + इय इत्यवस्थायाम् सिति चेति वार्तिकनिषेधात् 'इकोऽसवर्णे' इति प्रकृतिभावाभावे इको यणचीति यणादेशे ऋत्विय इति भवति तथा च सिति चेति वार्तिकाभावे 'इकोऽसवर्णे' इति प्रकृतिभावे ऋत्विय इत्यस्य सिद्धिर्न स्यात् कर्तव्यमेतत् * फलितार्थभूतं सिति चेति वार्तिकमिति स्वीकारादिति दिक्॥ २६॥

* सिन्नित्यसमासयोः शाकल्यप्रतिषेधो वक्तव्य इति वार्तिकखण्डभूतम्।

# यू किं मात्रे।

ननु "शेषोघ्यसखि" इति सूत्रे यूग्रहणस्यानुवर्तनं न कार्य्यम्। न च यूग्रहणाभावे हलन्तशब्दस्य घिसंज्ञा स्यात, विश्वपाशब्दस्य च घिसंज्ञायां ङिति गुणादेशः, नात्वापतिश्च स्यात्, एकारौकारान्तस्य घिसंज्ञायाम् सया, गवेत्यादौ नादेशापत्तिश्च स्यादिति वाच्यम्, अत्र 'ङिति ह्रस्वश्च' इत्यतो ह्रस्वग्रहणस्यानुवर्त्तनेन ह्रस्वस्यैव घिसंज्ञाभवतीति स्वीकारात्। न च तदभावे अदन्तस्य रामादिशब्दस्य घिसंज्ञायाम् टा इत्यस्य स्थाने ना स्यादिति वाच्यम् इनाबाधात्। रामस्येत्यादौ गुणे विशेषाभावः। "अच्च घेः" इत्यत्रेदुद्भ्यामित्यस्यानुवर्तनेन रामे इत्यत्रापि न दोषः। न च हरिहरावित्यादौ हरशब्दस्य घिसंज्ञायां "द्वन्द्वे घि." इति सूत्रेण पूर्वनिपातापत्तिरिति वाच्यम् अदन्तस्य चेत्तर्हि अजादेरेवेति "अजाद्यन्तम्" इत्यस्य नियमार्थत्वात्। "इद्ग्नेः सोमवरुणयोः" इत्यत्राग्नेरिति निर्देशात् अजादेश्चेत्तर्हि अनन्तस्यैवेति विपरीतनियमो न। न च तदभावे मातृशब्दस्य घिसंज्ञायाम् मात्रे, इत्यत्र 'घेर्ङिति' इति गुणःस्यादिति वाच्यम् 'ऋतो ङि सर्वनामस्थानयोः' इत्यत्र ङिग्रहणं व्यर्थं सत् ज्ञापयति—ऋदन्तस्य गुणश्चेत्तर्हि ङावेवेति स्वीकारात्। विपरीतनियमस्तु फलाभावान्न भवतीति। मातृशब्दस्य स्त्रीत्वात् मात्रा इत्यत्र टा इत्यस्य स्थाने नारूपदोषो नेति चेन्न यूग्रहणाभावे ऋकारान्तस्य घिसंज्ञायाम् पित्रा इत्यत्र टा इत्यस्य स्थाने नात्वापत्तेः। यू किं मात्रे इति मूलन्तु परिच्छेतृवाचिमातृशब्दस्य तृतीयैकवचने घित्वेन नात्वापत्त्या मात्रा इति प्रत्युदाहरणस्योपलक्षणं बोध्यमिति दिक्॥ २७॥

# ङिति किं हरिभ्याम्।

न च घिसंज्ञकस्याङिति गुणश्चेत्तर्हि जस्येवेति 'जसि च' इति नियमात् हरिभ्यामित्यादौ न दोषः ङितिग्रहणं न कार्य्यमिति वाच्यम् जसि गुणश्चेत्तर्हि घिसंज्ञकस्यैवेति विपरीतनियमेन पतयः, इत्यादौ गुणानापत्तेः। तस्मात् ङितिग्रहणं कर्तव्यमेवेति दिक्॥ २८॥

## जसि च।

ननु 'जसिच, जुसि च' इति सूत्रद्वयं न कार्यम्। तत्स्थाने लाघवात् 'जिति च' इत्येव सूत्रमस्तु ह्रस्वान्तस्याङ्गस्य गुणस्स्याद् जिति परे इत्यर्थः। हरयः, अजागरुः, अजुहवुरित्यादीनामनेनैव सिद्धिरिति प्रश्नः। न च जिति चेति न्यासे उक्तार्थे अबिभयुरित्यादौ ह्रस्वान्तत्वाभावेन गुणो न स्यादिति वाच्यम् जुसि च, इति सूत्रस्थाने जिति च, इति न्यासेन तत्र ह्रस्वस्य गुण इति सूत्रस्यासम्बन्धेन इक्परिभाषोपस्थित्या इगन्ताङ्गस्य गुणस्स्याद् जिति परे इत्यर्थेन सूत्रद्वयं न कार्य्यमिति प्रश्नात्। न च जिति चेति न्यासे ऊर्णुयुः जागृयुरित्यादौ यदागमन्यायेन विशिष्टे जित्वात् गुणस्स्यादिति वाच्यम् यदागमपरिभाषायाः अनित्यत्वात्, अचीत्यनुवर्त्य इगन्ताङ्गस्य गुणस्स्यात् अजादौ जिति परे इत्यर्थाच्च। न च जिति चेति न्यासे उक्तार्थे वातप्रम्यः, गौर्य्य इत्यादावपि गुणस्स्यादिति वाच्यम् दीर्घाज्जसि च, इत्यत्र जसिग्रहणसामर्थ्याज्जसि दीर्घस्य गुणो नेति ज्ञापनेनादोषात्। न च जिति चेति न्यासे वञ्चुप् प्रत्यये जकारस्य प्रश्लेषः तस्य चुटू इत्यनेन इत्संज्ञा लोपे सति मुनिवञ्चुरित्यत्र गुणः स्यादिति वाच्यम् तत्र तालव्ययकारस्य प्रश्लेषेण तस्य लोपो व्योर्वलीत्यनेन लोपात्। न चैवं पटुजातीयरित्यत्र जकारस्येदानीमित्संज्ञायां जित्परत्वात् गुणइतिवाच्यम् तत्रापि लोपोव्योर्वलीति लोपेन यकारप्रश्लेषात्। न च जिति चेति न्यासे शब्दस्वरूपस्य ग्रहणे हरि जितीत्यत्र गुणस्स्यात् हरयइत्यादौ च नस्यादितिवाच्यम् वादय इत्यादिनिर्देशात्। न च अजुहवुरित्यादौ ङित्वेन क्ङिति चेति निषेधात् गुणो न स्यादिति वाच्यम् इदानीमपि जिति चेति सूत्रारम्भसामर्थ्यात्। न च हरय इत्यादौ जसि जिति चेति सूत्रं चरितार्थम् सामर्थ्यकल्पनमयुक्तमिति वाच्यम् भेर्जुसीत्यत्र जकारग्रहणसामर्थ्यादिति चेन्न अनेकक्लिष्टकल्पनापेक्षया यथोक्तमेव वरमिति स्वीकारात्॥ २६॥

## सुडनपुंसकस्य।

नन्वत्र लाघवात् 'सुट्' इत्येव सूत्रमस्तु अनपुंसकग्रहणं न कार्य्यम् सुट्प्रत्याहारः स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि

स्युरिति तदर्थः । अनपुंसकग्रहणाभावे ज्ञाने इत्यादौ सर्वनामस्थान-पर्य्युदासात् भसंज्ञाभावेनैव यस्येति लोपाभावे सिद्धे औङः श्यामिति वार्त्तिकमपि न कार्य्यमिति महल्लाघवम् । न चानपुंसकग्रहणाभावे अहनी, अह्नी इत्यादौ भत्वाभावात् विभाषाङिश्योरिति सूत्रेणानोऽका-रस्य लोपाभावे दीर्घापत्तिरिति वाच्यम् औङ्स्थानिके श्यादेशे साम्प्रतं यस्येति लोपाप्राप्त्या औङःश्यामिति तन्निषेधकस्य वचनस्य वैयर्थ्येन शीपरे भत्वप्रयुक्तकार्य्याणि भवन्तीति ज्ञापनात् । किञ्च विभाषाङि-श्योरित्यत्र शीग्रहणसामर्थ्येन शीपरे अभस्याप्यनोऽकारस्य लोप इति ज्ञापनात् । न चैवं सुपथी इत्यादौ अनपुंसकग्रहणाभावे अन्यानि भत्व-प्रयुक्तकार्य्याणि न भवन्तीति वाच्यम् भत्वावच्छिन्नोद्देश्यककार्य्य-मात्रस्य शीपरे विधानमिति ज्ञापनात् असति बाधक इति न्यायात् । न चैवमपि अनपुंसकग्रहणाभावे ज्ञाने इत्यादौ सर्वनामस्थानसंज्ञा-पत्त्या 'नपुंसकस्य झलचः' इति नुमापत्तिः 'शि सर्वनामस्थानम्' इति सूत्रस्य नपुंसके चेत् शावेवेति नियमार्थत्वं तु वक्तमशक्यम् शसः शिप्रत्ययस्थाप्राप्ततत्संज्ञाविधानार्थं तस्य चरितार्थत्वेन नियमार्थ-त्वानपायात् । न च टाटकारेण सुट् प्रत्याहारे शसोप्यन्तर्भावात् शि सर्वनामस्थानमित्यस्य नियमार्थत्वेनेतरेषां नपुंसके संज्ञाविरहे सिद्धे अनपुंसकग्रहणाभावे नोक्तदोष इति वाच्यम् औटि टकारोच्चारणसाम-र्थ्येन तेनैव सुट्प्रत्याहारस्य स्वीकारात् । एवञ्च तदभावे पूर्वोक्तदूषणं तादवस्थमेवेति वाच्यम् शीभिन्नस्य सुटः सर्वनामस्थानसंज्ञेत्यर्थकेन "सुडशी" इति न्यासेनोक्तदोषस्य वारणात् । सुडशीति न्यासेन ज्ञाने इत्यादौ सर्वनामस्थाननिमित्तकनुमः अह्नी, लोम्नी इत्यादौ दीर्घापत्ते-श्च वारणात् । एतेनात्र दीर्घवारणं शीसर्वनामस्थानमिति नियमेन न कार्य्यमिति बोध्यम् । न च सुडशीति न्यासे स्त्रियां सर्वे इत्यादौ सर्वा-शब्दात् औङौटोः श्यादेशे सर्वशब्दात् जसः श्यादेशे सर्वे इत्यादौ च सर्व-नामस्थानत्वाभात् भसंज्ञापत्त्या यस्येति चेत्यल्लोपापत्तिरिति वाच्यम् औङः श्यामिति वार्त्तिके औङ् ग्रहणं परित्यज्य श्यां प्रतिषेध इत्यनेन लोपाभावस्य सुलभत्वात् । यस्येति सूत्रे नदीसंज्ञकेकार इत्यर्थं स्वी-कृत्य तत्प्रत्याख्याने तदभावाच्च । न चानपुंसकग्रहणाभावे अतिजरसं कुलं पश्येत्यत्र नुमापत्तिरिति वाच्यम् सन्निपातपरिभाषया नुम्वारण-सम्भवात् । न चातिजरसं कुलं पश्येत्यादौ झलन्तलक्षणनुमापत्तिः,

'शेखरकारमते अतिजरसं कुलं न भवति तदा न दूषणम्' किन्तु दीक्षितमते एव दूषणमिति तु न भ्रमितव्यम्। सिद्धान्ते अतिजरसं पश्येत्येव भवतीति भाष्यादिति वाच्यम् 'नपुंसकस्य झलचः शौ' इति न्यासेन वारणात्। न चैवं न्यासे गौरवापत्तिरिति वाच्यम् शि सर्वनामस्थानम्, इति सूत्रस्याकर्त्तव्यत्वेन लाघवात्। न चैवं सूत्राभावे ज्ञानानीत्यादौ दीर्घो न स्यादिति वाच्यम् 'सर्वनामस्थाने चासम्बुद्धौ शौ' इति न्यासेन दीर्घस्य सुलभत्वात्। प्रत्यञ्चीत्यादौ नुम् तु 'उगिदचां सर्वनामस्थानेऽधातौ शौ' इति न्यासेन सुलभः गौरवमपि न अस्मादेव शावित्यस्यानुवृत्त्या सिद्धौ नपुंसकस्य झलच इति सूत्रे शावित्यस्याकर्त्तव्यत्वेन लाघवात्। न च सुपन्थानीत्यत्र भसंज्ञया टेर्लोपापत्तिरिति वाच्यम् टेर्लोपे कृते 'थोन्थः' इत्यत्र 'थोन्था' इति न्यासेनापत्तिविरहात्। सर्वनामस्थानपरत्वाभावेन सूत्रस्यैवाप्रवृत्तिरित्यपि न वाच्यम् सूत्रे शाविति पाठेन निर्वाहादिति चेन्नानेकक्लिष्टकल्पनापेक्षया सूत्रस्य कर्त्तव्यत्वात् ॥ ३० ॥

## स्वादिष्वसर्वनामस्थाने।

नन्विदं सूत्रं मास्तु तत्स्थाने लाघवात् "शसादिषु" इत्येव सूत्रमस्तु कप्प्रत्ययावधिषु शसादिषु परतः पूर्वं पदसंज्ञं स्यादिति तदर्थः।

यचि भमित्यस्यापि यकारादिष्वजादिषु च कप्प्रत्ययावधिषु शसादिषु परतः पूर्वं भसंज्ञं स्यादित्यर्थः। शसादिष्विति न्यासे कुले इत्यादौ शीपरे शसादिपरत्वाभावेन भसंज्ञाभावेनैव यस्येति चेत्यनेन लोपाभावः सिद्धः औङःश्यामिति वार्तिकमपि न कार्य्यमिति महल्लाघवम् ॥ न च शसादिष्विति न्यासे कतरदित्यादौ भसंज्ञाभावात् टेरित्यनेन लोपो न स्यादिति वाच्यम् डित्त्वसामर्थ्यादभस्यापि टेर्लोप इति ज्ञापनात्। न च शसादिष्विति न्यासे अह्नी, अहनी इत्यादौ शीपरे भसंज्ञाभावेन विभाषा ङिश्योरित्यनेनाल्लोपो न स्यादिति वाच्यम् शीपरे अभस्याप्यनोऽकारस्य लोप इति ज्ञापनात्, विभाषा ङिश्योरित्यत्र शीग्रहणसामर्थ्यात्। न चैवं ज्ञापनेऽपि सुपथी, सुपदी, सुयूनी इत्यादौ शसादिष्विति न्यासे तत्तत् भत्वप्रयुक्तकार्य्याणि न भवन्तीति वाच्यम् विभाषाङिश्योरित्यत्र शीग्रहणसामर्थ्येन सामान्यतः भत्वावच्छिन्नोद्देश्यककार्य्यमात्रस्य शीपरे विधानमिति ज्ञाप-

नात् असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायादिति चेन्न अहानीत्यादौ शसः शिकृते शसादिष्विति न्यासे शिपरे भत्वात् नान्तलक्षणदीर्घम्बाधित्वा परत्वादल्लोपो न इत्यनेनाल्लोपापत्तेः न लुमताङ्गस्येति सूत्रस्थस्वादिष्विति योगविभागपरकभाष्येण सह विरोधाच्च ३१

## अचो ञ्णिति।

ननिवदं सूत्रं मास्तु 'अत उपधायाः' इत्यत्रैव ञ्णितीति पाठ्यम्। न च सूत्राभावे सखायावित्यादौ वृद्धिर्न स्यादिति वाच्यम् "सख्युरसम्बुद्धौ" इत्यस्य स्थाने सख्युरङ्गस्य ऐ आदेशःस्यादसम्बुद्धौ सर्वनामस्थाने परे इत्यर्थकेन' ऐ सख्युरसम्बुद्धौ' इति न्यासेनोक्तदोषाभावात्। गोतो ञ्णितीति सूत्रस्थाने 'गोत औङ्' इति न्यासेन सर्वनामस्थाने परे गोः औः स्यादित्यर्थकेन निर्वाहात्। न च गोत औदिति न्यासे 'णलुत्तमो वा' इत्यत्र कागतिरिति वाच्यम् गौरित्यादौ वृद्ध्यर्थम् गोतो ञ्णितीत्यस्य स्थाने 'गोतो वृद्धिः' इति न्यासः सर्वनामस्थाने परे गोः वृद्धिरिति तदर्थः तस्य णलुत्तमा वेत्यत्र सम्बन्धेनादोषात्। एवञ्च सख्युरसम्बुद्धौ, इत्यत्रापि वृद्धेरेवानुवृत्त्या सख्युरङ्गस्य वृद्धिरसम्बुद्धौ सर्वनामस्थाने इत्यर्थकेन अलोऽन्त्यपरिभाषयेष्टसिद्धिः पूर्वोक्त ऐसख्यु रसम्बुद्धाविति न्यासो न कार्य्यः। न च सूत्राभावे कुम्भकार इत्यादौ वृद्धिर्न स्यादिति वाच्यम् कृ अ इत्यवस्थायां 'सार्वधातुकार्धधातुकयोः' इति गुणात्तरम्'अत उपधायाः' इति वृद्धौ तत्सिद्धेः। न च गुणोत्तरा वृद्धिर्नेति परिभाषया वृद्धिर्न स्यादिति वाच्यम् गमकत्वाभावेन फलाभावेन चैतस्याः परिभाषायाः उपेक्षणात्। अतएव ह्यन्तेति सूत्रे जागृग्रहणं चरितार्थम्, एवं भावयतीत्यादीनामपि सिद्धिः। न च सूत्राभावे शिङ्धातोः शिङो धुक्लक्वलञ्वलञित्युणादिसूत्रेण वलञ् कृते शैवल इत्यत्र वृद्धिर्न स्यादिति वाच्यम् तत्र वलञित्यस्य स्थाने डैवलिति न्यासेन शैवल इत्यस्य सिद्धेः। न च डैवलिति न्यासे ञित्वाभावेन नामधातौ 'स्वरित ञित इति' सूत्राप्रवृत्तेः उभयपदं न स्यादिति वाच्यम् डैवलञिति न्यासात् शैवल इत्यस्यौणादिकत्वेनाव्युत्पन्नत्वाच्च। न च सूत्राभावे जजागारेत्यत्र जाग्रोविचिण्णल्ङित्स्वति सूत्रेण णलि गुणनिषेधेन 'अत उपधायाः' इति सूत्रस्याप्रवृत्त्या यणि जजाग्रेत्यनिष्टं स्यादिति वाच्यम् तस्मिन् सूत्रे णल्ग्रहणम् अचोञ्णि-

तीति सूत्रञ्च न कार्य्यमिति प्रश्नात्। न च जाग्र इति सूत्रे णल्ग्रहणाभावे उत्तमे णलि गुणे णलुत्तमो वेति सूत्रेण विकल्पणित्वे वृद्धौ च जजागार जजागरेत्यनिष्टं स्यात् इष्यते तु जजागार जजाग्रेति वाच्यम् णलुत्तमो वेति सूत्रस्थाने 'णलुत्तमोऽपिद्वा' इति न्यासे जागृधातोः उत्तमे णलि पित्पक्षे गुणे कृते उपधावृद्धिः अपित्पक्षे असंयोगाल्लिटीति सूत्रेण कित्वे जजागार जजाग्रेति रूपद्वयमिष्टमतः णल्ग्रहणम्, अचो ञ्णितीति सूत्रञ्च न कार्य्यमिति प्रश्नात्। न च णलुत्तमोऽपिद्वेति न्यासे तृधातोः उत्तमे णलि ततार तत्रेति स्यात् ईष्यते तु ततार ततरेति वाच्यम् न ह्येकमुदाहरणं योगारम्भं प्रयोजयतीति भाष्यात्। जजागारेत्येतदर्थम् अचो ञ्णितीति सूत्रस्याकर्तव्यत्वात् ॥

न च सति सूत्रे चकावित्यादौ क इव चचारेति विग्रहे क्विपि धातुत्वाल्लिटि द्वित्वे चक अ इत्यवस्थायां वृद्धौ आत औ णलित्यनेनौ कृते तस्य सिद्धिः सूत्राभावे आत औणलित्यस्याप्रवृत्त्या पररूपेण चक इत्यनिष्टं स्यादिति वाच्यम् आत औ णलिति सूत्रे अशब्दस्य पंचम्येकवचने आदिति तस्यायमर्थः अवर्णात् परस्य णल औ स्यादित्यदोषात्। न चेत्यर्थे उत्तमे णलि चकौ इत्येकमेव रूपं स्यात् इष्यते तु णलुत्तमो वेति विकल्पणित्वात् चकौ चक इति वाच्यम् 'आत औणिण्णलः' इति न्यासेनावर्णात् परस्य णिण्णलऔकारःस्यादित्यर्थेनोक्तदोषाभावात्। न च 'आत औणिण्णलः' इति न्यासे पाधातोः उत्तमे णलि णलुत्तमो वेति णित्पक्षे पपौ इति रूपं णिदभावपक्षे पपेति रूपद्वयमनिष्टं स्यात् इष्यते तु पपौ इत्येकमेवेति वाच्यम् एकाज्भ्यः क्विपोऽनभिधानमिति भाष्येण चकौ इति रूपं भवत्येव नेति स्वीकारात्। तदा सूत्रस्य जागृधातोः णलि जजागारेत्येकमेवोदाहरणम् तत् सूत्राभावे न ह्येकमुदाहरणमिति भाष्यात् वारणीयम् उत्तरार्थमपि न, तत् तत्सूत्र एव वक्तव्यत्वादिति चेन्न स्पष्टप्रतिपत्त्यर्थमिति समाधानादिति दिक् ॥ ३२ ॥

## अनुपसर्जनात्।

ननु टिड्ढेति सूत्रे ढाणआदीनां प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषया तदन्तविधावपि टितः प्रत्ययाप्रत्ययसाधारणतया प्रत्ययमात्रग्रहणाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या, 'समासप्रत्ययविधौ' इति निषेधात् प्रातिपदिकविशेष्यकतदन्तविध्यभावेन च अनुपसर्ज-

नाट्टितः प्रातिपदिकात् ङीवित्यर्थे अवयवेऽचारितार्थ्यस्य समुदायोपकारकत्वेन कुरुचरशब्दस्य टित्त्वात् ङीप्यपि, बहुकुरुचरशब्दस्य टित्त्वे मानाभावेन तत्र टित् प्रातिपदिकत्वाभावात् ङीपः प्रवृत्तिरेव नास्ति तत्र ङीप् वारणार्थं कृतोऽनुपसर्जनाधिकारो व्यर्थीभूय ज्ञापयति—स्त्रीप्रत्यये तदन्तविधिर्भवतीत्याशयेनाह—अयमेवेति। तदन्तविधिज्ञापनोत्तरमनुपसर्जनाधिकारो गृह्यमाणस्य विशेषणं भवतीति बोध्यम्। अन्यथा अनुपसर्जनादिति यदि तदन्तस्य विशेषणं स्यात्तर्हि तदन्तविधिज्ञापनेऽपि टिदन्तस्य बहुकुरुचरशब्दस्योपसर्जनत्वासम्भवेनानुपसर्जनाधिकारस्य व्यावर्त्यत्वाभावेनानुपसर्जनाधिकारो व्यर्थस्स्यात्। स्त्रियामिति तदन्तस्य विशेषणमित्यपि तेन ज्ञाप्यते अन्यथा स्त्रियामित्यस्य गृह्यमाणविशेषणत्वे तदन्तविधिज्ञापितेऽपि टितः कुरुचरशब्दस्य तत्र स्त्रियां वृत्त्यभावात् सोऽनर्थकस्स्यात्। तथा च बहवः कुरुचराः यस्यामिति विग्रहे टितः कुरुचरशब्दस्योपसर्जनत्वात् ङीप् न भवतीति। न च, यद्यपि कुरुचर इवाचरतीति विग्रहे कुरुचरशब्दाकारस्य लोपेऽदन्तत्वाभावस्तथापि गौरादिषु अनुडुच्छब्दः पठ्यते तस्मात् आचारक्विबन्तप्रकृतिककर्तृक्विबन्ते अनुपसर्जनाधिकारः चारितार्थ्य इति वाच्यम् एतत् भाष्यप्रामाण्येन हलन्तेभ्य आचारक्विपोऽनभिधानमिति स्वीकारात्। एवञ्च प्रातिपदिकविशेष्यकतदन्तविधिज्ञापनेऽणन्तात् प्रातिपदिकात् ङीवित्यर्थे कुम्भकारशब्दस्याणन्तान्तत्वेन तस्मात् ङीपि कुम्भकारीशब्दस्य स्त्रीप्रत्ययान्तत्वात् ततः 'स्त्रीभ्यो ढग'िति ढकि कौम्भकारेयसिद्धिः। अन्यथा तदन्तविध्यभावे अणन्तात् प्रातिपदिकात् ङीवित्यर्थे कुम्भकार्य्या अपत्यमिति विग्रहे केवलकारीशब्दस्य स्त्रीप्रत्ययान्तत्वात् तस्मात् ढकि कुम्भकारेय इत्यापद्येत॥ ३३॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्।

नन्वत्रोपसर्जनग्रहणं न कार्य्यम्। न च उपसर्जनग्रहणाभावे शिखेत्यत्र ङीष् स्यादिति वाच्यम् उपसर्जनग्रहणाभावे कल्याणपाणिपादेत्यादौ ङीष्वारणाय 'अस्वाङ्गपूर्वपदात्' इत्यनुवर्त्य स्वमङ्गं स्वाङ्गं न स्वाङ्गमस्वाङ्गं तच्च तत् पदञ्च तस्मादिति तदर्थः स्वाङ्गभिन्नपूर्वपदात् परमिति फलितम् ततश्च प्रकृते स्वाङ्गभिन्नपूर्वपदात् परत्वाभावेन शिखे-

त्यत्र ङीष्प्रवृत्तेः। उपसर्जनग्रहणाभावे शोभनाशिखासु शिखेति विशिष्टे अदन्तत्वाभावात् ङीषः प्रवृत्तिरेव नास्ति। नापि अशिखेत्यत्र ङीषः प्रवृत्तिः न शिखेति नञ्तत्पुरुष'सहनञ्विद्यमान' इति निषेधात्। अस्य शिखा अशिखेति समास तु विशिष्टे अदन्तत्वाभावादप्रवृत्तिः। न च बहुव्रीहिनिवृत्त्यर्थमुपसर्जनग्रहणमिति वाच्यम्, बहुव्रीहिपदानुवृत्त्या सूत्रस्योदाहरणासम्भवात्। अतिकेशीत्यत्र ङीषभावाच्चेति चेन्न, उपसर्जनग्रहणाभावेऽनुपसर्जनादित्यस्यानुवृत्तौ अस्वाङ्गपूर्वपदात्परं यदनुपसर्जनं स्वाङ्गवाचकं तदन्तादन्तात् प्रातिपदिकाद् ङीष् इत्यर्थे अस्य शिखा अशिखेत्यत्र ङीष् प्रवृत्तेः। न चात्रादन्तत्वाभावात् ङीषः प्रवृत्तिनं स्यात्, स्त्रीत्वाविवक्षया अदन्तत्वात् ङीषापत्तिस्तु न वक्तव्या, नियतलिङ्गेषु स्त्रीत्वाविवक्षायाः असम्भवादिति वाच्यम् वाक्यसंस्कारपक्षे उत्पत्तिक्रमेणैवान्वाख्यानात् पूर्वं टाबभावेनादन्तत्वाद्ङीष्प्रवृत्तेः। कल्याणपाणिपादेत्यादौ ङीष्वारणाय अस्वाङ्गपूर्वपदादित्यस्यानुवर्तनेनास्वाङ्गपूर्वपदात्परत्वाभावात् शिखेति प्रत्युदाहरणं न युक्तम् किन्तु शोभना शिखा इति प्रत्युदाहरणं कौमुद्यां बोध्यम्। अतएव शेखरे 'इदमेव प्रत्युदाहरणं शोभनेत्यादि' शोभना शिखा इति प्रत्युदाहरणमित्यर्थ इत्युक्तम्। न च पूर्वपदत्वाभावात्। शोभना शिखेति प्रत्युदाहरणं न युक्तमिति वाच्यम् अस्वाङ्गपूर्वपदादित्यत्र पूर्वपदं न समासाद्यवयवपरमिति स्वीकारात् अतएव भाष्ये यदस्वाङ्गपूर्वपदात् परं पादेति स्वाङ्ग न तदन्तं बहुव्रीहिरित्युक्तम् अन्यथा कल्याणपाणि इत्यस्य विशिष्टसमासीयपूर्वपदत्वात् तदसङ्गतिःस्यात् अतएव भाष्ये हे अशिखा इति प्रत्युदाहृतम् अत्र अ इति सम्बोधनमिति दिक्॥ ३४॥

## असिद्धवदत्राभात्।

'ननु असिद्धवदत्राभात्' इदं सूत्रं न कार्य्यम्। न च सूत्राभावे जङ्हीत्यत्रानुनासिकलोपे, जहीत्यत्र च जादेशे कृते 'अतो हेः' इति सूत्रेण हेरित्यस्य लुक् स्यात्, सति सूत्रे अनुनासिकलोपस्य जादेशस्य चासिद्धत्वाल्लुक् न भवतीति वाच्यम्, अतः प्रत्ययादेव हेर्लुक् भवतीत्यर्थकेन 'अतो हेः प्रत्ययात्' 'उतश्चासंयोगपूर्वाद्' इति न्यासेन सिद्धेः। न च सूत्राभावे कुरु इत्यत्र कृ+उ+हि इत्यवस्थायां सर्वविधिभ्य

इति न्यायेन हेर्लुकि सार्वधातुकपरत्वाभावात् "अत उत्सार्वधातुके" इति सूत्रेणोत्वं न स्यात्, सति सूत्रे तु हेर्लुकः असिद्धत्वात् सार्वधातुकपरत्वमाश्रित्यात उदिति सूत्रेणोत्वं भवतीति वाच्यम् उप्रत्ययान्ताङ्गावयवकरोतेरत उदित्यर्थेन लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञया भूतपूर्वगत्या सार्वधातुकपरत्वाश्रयणेन वा उत्सिद्धे। न च सूत्राभावे एधि, शाधीत्यत्र परत्वान्नित्यत्वाच्च 'ध्वसोरेद्धौ' इत्येत्वे शाधीत्यत्र च शाभावे कृते धित्वं न स्यात्, सति च सूत्रे एत्वस्य, शाभावस्य चासिद्धत्वात् धित्वमिति वाच्यम् 'घ्वसोरेद्धौ' इति सूत्रे अत इत्यनुवर्त्यात एवैत्वे धित्वे सलोपे चैधीत्यस्य 'शास इदङ्' इति प्राप्तेत्ववाधक 'शाहौ' इति सूत्रस्य स्थाने 'शासहौ' इति न्यासेन शासादेशे धित्वे सलोपे च शाधीत्यस्य सिद्धेः। 'शाहौ' इत्यस्य स्थाने 'नहौ' इति न्यासेन निषेधेऽपि शाधीत्यस्य सिद्धेश्च। न च सूत्राभावे आसनित्यत्र श्नसोरिति सूत्रेणाल्लोपे अनजादित्वादट् न प्राप्नोति, सति च सूत्रे श्नसोरित्यल्लोपस्यासिद्धत्वादट् भवतीति वाच्यम् लावस्थायामडागमेनास्यान्यथासिद्धेः। न च लावस्थायामडिति वक्तव्ये ऐज्यत इत्यादीनामसिद्धिरिति वाच्यम् आडजादीनामिति सूत्रं न कार्य्यम अडागमेनैव लक्ष्यसिद्धिः वृद्धिविधावटश्चेति वक्तव्यमित्यादिस्वीकारादिति चेन्न अनेकक्लिष्टकल्पनापेक्षया सूत्रस्यैवावश्यकत्वादिति दिक् ॥ ३५ ॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च।

ननु लिङादेशानां तिवादीनां स्थानिवद्भावेन ङित्त्वात् तदागमस्य यासुटः 'यदागमाः' इति परिभाषया ङित्त्वं सिद्धम् सूत्रे ङित् ग्रहणं न कार्य्यम्। न चाल्विधित्वात् स्थानिवद्भावो न स्यादिति वाच्यम् 'न ल्यपि' इति ज्ञापकात् अनुवन्धकार्य्ये 'अनल्विधौ' इति निषेधस्याप्रवृत्तेः। अन्यथा प्रदायेत्यादौ क्त्वाकित्त्वस्य स्थानिवत्त्वेन ल्यप्यभावात् 'घुमास्था...' इति सूत्रेणेत्वस्य प्रवृत्तिरेव नास्ति तन्निषेधार्थं 'न ल्यपि' इति सूत्रं व्यर्थं स्यात्। अतएव रमायामित्यादौ परत्वान्ङेरामि कृते स्थानिवद्भावेनामो ङित्वात् 'याडापः' इति याडागमस्सिद्धर्यात। न च ङित्ग्रहणसामर्थ्यात् लाश्रयानुवन्धकार्य्ये 'अनल्विधौ' इति निषेधः प्रवर्तते, अतएव वक्ष्यमाणेत्यत्र स्थानिवद्भावेन टित्वात् ङीब् न भवतीति वाच्यम् लाश्रयानुबन्धकार्य्यस्य तदादेशेष्वभावेऽपि

तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने मानाभावेन ब्रूतादित्यत्र 'ब्रुव ईट्' प्राप्नोतीति कल्पनात्। न च श्नः शानचः शित्त्वेनानुबन्धकार्य्ये 'अनल्विधौ' इति निषेधः प्रवर्तत इति सामान्यापेक्षज्ञापनेन ङिद्ग्रहणं न व्यर्थमिति वाच्यम्, शानचः शित्वस्य प्रत्याख्यानात्, 'सेर्ह्यपिच्च' इति सूत्रे अपिद्ग्रहणस्य, तातङो ङित्त्वस्य च वैयर्थ्यापत्तेश्चेति ङिद् ग्रहणं व्यर्थमेवेति चेन्न, ङिच्च पिन्न पिच्च ङिन्नेति, व्याख्यानादौपदेशिकेन पित्त्वेनातिदेशिकं ङित्त्वं वाध्यते अतो यासुट्सूत्रे ङिद्ग्रहणं कर्त्तव्यमेवेति स्वीकारात्। वक्ष्यमाणेत्यत्राजादित्वाट्टाब्भवतीति बोध्यम्॥ * न च यासुट्स्थाने 'ङ्यासुट्' विधानेन सिद्धे सूत्रे ङिद्ग्रहणं न कार्य्यमिति वाच्यम् जागर्य्यादित्यस्यासिद्ध्यापत्तेः। सिद्धान्ते 'किदाशिषि' इति कित्त्वातिदेशेन विशेषविहितेन ङित्वातिदेशो बाध्यते अतः 'जाग्रोऽविचि' इति गुणो भवति, सम्प्रति तु ङित्वस्यौपदेशिकतयाऽस्यातिदेशिकेन कित्त्वेन बाधाभावेन आशिषि लिङ्यपि यासुटः ङित्त्वात् 'जाग्रोऽविचि' इति सूत्रे ङित्वपर्य्युदासेन तत्र गुणानापत्तेः॥ न च 'क्यासुट्' न्यासे ङिद्ग्रहणं 'किदाशिषि' इति सूत्रञ्च न कार्य्यमिति वाच्यम् वच् धातोर्जागृधातोश्च विधिलिङि वच्यात्, जागृयादित्यादौ कित्त्वात् 'वचिस्वपि' इति सूत्रेण सम्प्रसारणम्, 'जाग्रोऽविचि' इति सूत्रेण गुणादेशापत्तिश्चेति स्वीकारात्॥ न च यासुटःस्थाने 'श्यास्' इति न्यासे शित्वात् ङित्वे सिद्धे सूत्रे ङिद्ग्रहणं न कार्य्यम्। सकारस्योच्चारणार्थकत्वेन सकारस्येत्संज्ञाऽपि नेति वाच्यम्, भूधातोराशिषि लिङि श्यासिप्रत्यये श्यासः सार्वधातुकत्वात् शप्प्रवृत्तेः शपोऽप्रवृत्तावपि ह्वयादित्यादौ सार्वधातुकपरत्वात् 'अकृत् सार्वधातुकयोः' इति सूत्रेण दीर्घस्याप्रवृत्तेश्च। छिवुधातुभ्य आशिषि लिङि श्यासि प्रत्यये 'छिवुक्लमुचमां शिति' इति दीर्घापत्तेरिति॥ ३६॥

## माङि लुङ्।

ननु पुराणादौ मास्तु, मा वदेत्यादि प्रयोगाणामार्षत्वात् साधुत्वेपि, लोके मास्तु, मावदेत्यादीनामसाधुत्वमेव। न च नात्र माङ्

* यासुट्सूत्रे ङिद्ग्रहणस्य किं प्रयोजनम्, वक्ष्यमाणेत्यादौ डीप् कथं नेत्युभयविधप्रश्ने—एतत्पर्य्यन्तं व्याख्यानमुत्तरम्, परीक्षोपयोगि च। अतः परं शास्त्रार्थोपयोगि।

किन्तु निषेधार्थको माशब्द इति वाच्यम् निषेधार्थकमाशब्दस्य सत्त्वे 'माङि लुङि' इति सूत्रस्य वैयर्थ्यापत्तेः। न च ङितो माङ्योगे लुङन्तस्यैव प्रयोगः, अङित् मायोगे अन्यस्यापीति विशेषलाभार्थमिदं सूत्रमिति वाच्यम्, उभयथा निषेधार्थस्यैव प्रतीतेः विशेषस्याकिंचित्करत्वात् न च माङ्योगे माभवान् भूत्, मायोगे माभवानभूदिति प्रयोगद्वयसिद्ध्यर्थं सूत्रमिति वाच्यम् न माङ्योगे इत्यस्य स्थाने 'वा माङ्योगे' इति न्यासेन सिद्धेः। [1]अतएव 'आङ्माङोश्चेति, सूत्रे माङो ङकारः निषेधार्थकसम्प्रत्ययार्थः तेनेह मा भूत् प्रमाच्छत्रम् इति भाष्यं संगच्छते। ङित्रहितस्य माशब्दस्य निषेधार्थकत्वे 'माङो ङकारः निषेधार्थकसम्प्रत्ययार्थः' इति भाष्यकथनमसङ्गतमेव स्यात्। 'प्रतिषेधार्थकसम्प्रत्ययार्थ' इत्यनेन प्रतिषेधार्थको ङिदेवाङित् मा तु न प्रतिषेधार्थकर्थक इति ध्वनितम्। तथा च ङित्रहितस्य माशब्दस्य निषेधार्थकत्वाभावेन लोके मास्तु, मावदेत्यादीनामसाधुत्वमेवेति नव्या आहुरिति चेन्न, 'माङो ङकारः निषेधार्थकसम्प्रत्ययार्थः, इति भाष्यस्यैकदेशयुक्तित्वात् 'आङ्माङोश्च' इति सूत्रे आङिति निपातसाहचर्य्येण निपातमाशब्दस्यापि ग्रहणात्। अनिषेधार्थकस्य माङ्माने इत्यस्य सत्त्वेन प्रतिषेधार्थको ङिदेवेति कथनस्यासङ्गतेश्च। तथा च ङित्रहितस्य माशब्दस्यैव निषेधार्थकत्वम् 'माङि लुङ्' इत्यत्रान्यः माङ् न तु निषेधार्थक इति तेन निषेधार्थकमायोगे मा भवानभूदिति, अनिषेधार्थकमाङ्योगे तु माङ्योगेऽड्निषेधेन माभवान् भूदिति भवतीति प्राचीनमतम्। [2]अतएव 'मानिषाद प्रतिष्ठां त्वमगमः......' इति आदिकाव्ये ङित्रहितस्य निषेधार्थकस्य योगे अटः श्रवणं यातम्। अत्र न माङ्, अन्यथा अटः श्रवणं न स्यात्। लोके मास्तु, मावदेति बहूनां वृद्धप्रयोगाणां ऽमादकल्पनापेक्षया ङित्रहितस्य माशब्दस्य निषेधार्थकत्वमिति प्राचीनोक्तार्थस्यैवौचित्यम्, अत्रत्यशेखरस्तु चिन्त्य एवेत्यस्माकम्। तमिति बोध्यम्। तथा च 'माङि लुङ्' इति सूत्रस्य न किञ्चित् प्रयोजनम् 'न माङ्योगे' इत्यस्य स्थाने 'वा माङ्योगे' इति न्यासेन सर्वेष्टसिद्धेः। मास्तु, मावदेत्यादौ निषेधार्थकमाशब्दस्य सत्त्वेनोक्तप्रयोगाणां साधुत्वमेवेति दिक्॥ ३७॥

१ ङित्रहितस्य माशब्दस्यानिषेधार्थकत्वादेव।

२ ङित्रहितस्य माशब्दस्य निषेधार्थकत्वादेव।

## णलुत्तमो वा।

अत्र "अत उपधायाः" इत्यस्याग्रे, उत्तमे ञ्णिति वा वृद्धिरित्यर्थकेन "उत्तमो वा" इति सूत्रं न कार्य्यम्, कुटधातोरुत्तमे णलि णित्वविकल्पात् तदभावपक्षे "गाङ्कुटादिभ्य इति ङित्वे" चुकुट इति रूपं जायते इदानीं तन्न स्यादिति स्वीकारात्॥ ३८॥

## ऊधसोऽनङ्।

ननु "बहुव्रीहेरूधसो ङीष् नश्च" इति न्यासे षष्ठीनिर्दिष्टत्वात् अन्त्यस्य नकारादेशे ङीप्यल्लोपे च कृते कुण्डोध्नीत्यस्य सिद्धौ "ऊधसोऽनङ्" इति पृथक् सूत्रं न कार्य्यम्। न चानः लाक्षणिकत्वादल्लोपो न भविष्यतीति वाच्यम् तस्या अनित्यत्वात्। न च 'धनुषश्च" इत्यत्रोत्तरार्थं सूत्रमिति वाच्यम् "धनुषोऽनङ्" इति सूत्रकरणात्। न च सति सूत्रे अनङः समासान्तप्रकरणस्थत्वात् शेषत्वेन कुण्डोध्नीत्यत्र कप् न भवति, इदानीन्तु 'बहुव्रीहेरूधसः......'इत्यस्यासमासान्तत्वेन कब्भावे सावकाशस्योधसः पक्षे कपाबाधात् कुण्डोध्नीत्यत्र कप् स्यादिति वाच्यम् "बहुव्रीहेरूधसो ङीष् नश्च" इत्यस्य समासान्तप्रकरणे पाठेनोक्तदोषाभावादिति चेन्न "बहुव्रीहेरूधस......"इत्यस्य समासान्तप्रकरणे पाठे तु तत्र स्त्रियामित्यस्याधिकाराभावे, अतिलक्ष्मीरित्यादौ ह्रस्ववारणाय स्त्र्यधिकारोक्तस्यैव स्त्रीप्रत्ययान्तस्य ह्रस्व इत्यर्थकेन गोस्त्रियोरुपसर्जनस्येति सूत्रेण अतिकुण्डोध्निरित्यत्र ह्रस्वो न स्यादिति स्वीकारात्। सिद्धान्ते तु कुण्डोधो धैनुकमिति वारणाय तत्र स्त्रियामित्यस्योपसंख्यानमिति दिक्॥ ३९॥

## अह्नोऽदन्तात्।

अत्र अह्न इति, अदन्ताह्नादेशस्यानुकरणम् तथा च "अह्न" इति प्रथमान्तम् तेन दीर्घाणि अहानि यस्यामिति विग्रहे नान्तत्वात् ङीप्यल्लोपे दीर्घाह्नीत्यत्र "अह्नोह [1]एतेभ्यः" इत्यनेनाह्नादेशस्याभावेन "अ-

[1] यत्तु—'दीर्घाणि'–अहानि यस्यामिति विग्रहे दीर्घाह्नीत्यत्र "अह्नोह एतेभ्य" इत्यनेन अह्नादेश इति प्रक्रियानभिज्ञैःकैश्चित् स्वविरचितनूतनपुस्तके लिखितं तन्न युक्तम् सर्वादिभ्यः परस्याहन्छब्दस्यात्राभावेन, समासान्तपरत्वाभावेन च पूर्वोक्तसूत्रस्यात्राप्रवृत्तेः।

ह्नोऽदन्तात्' इत्यनेन णत्वं न भवतीति प्राञ्चः। तन्न युक्तम् "प्रातिपदिकान्त……" इति णत्ववारणाय क्षुभ्नादिगणे दीर्घाह्नीशब्दस्य पाठावश्यकत्वेन "क्षुभ्नादिषु च" इत्यनेनैव 'अह्नोऽदन्तात्' इति प्राप्तणत्वस्यापि वारणं युक्तं तदर्थम् 'अह्नोऽदन्तात्' इति सूत्रे अह्न इति अदन्तानुकरणक्लेशो न कर्तव्य इत्याशयेनाह—एवं चैतदर्थमित्यादि ॥ ४० ॥

## झलां जशोऽन्ते।

### ( अन्तग्रहणं झलीति निवृत्त्यर्थमिति शेखरग्रन्थः )

अयं भावः—'स्कोःसंयोगाद्योरन्ते च" इत्यतोऽन्तग्रहणेऽनुवर्तमाने पुनरन्तग्रहणं पदग्रहणातिरिक्तमन्यन्न किञ्चिदत्रानुवर्तत इति बोधयति। न च 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति सूत्रस्यानन्तरम् 'झलां जशोऽन्ते' इति सूत्रं वर्त्तते, तत्र 'एकाचः…'इति सूत्रस्थस्ध्वोर्ग्रहणासामर्थ्यात् निवृत्तस्य झलीत्यस्यानुवर्तनमसङ्गतमेव कथमन्तग्रहणं झलीति निवृत्यर्थमित्युक्तमिति वाच्यम् 'एकाचः…'इति सूत्रस्यानन्तरम् 'दधस्तथोश्च' इति सूत्रमपि वर्त्तते तत्र भाष्ये उक्तम्—"दधस्तथोश्च' इति सूत्रे तथोर्ग्रहणं न कर्तव्यं झलीत्यस्यानुवर्तनात् सिद्धम् तथा च स्ध्वोर्ग्रहणसामर्थ्यात् निवृत्तस्यापि *झलीत्यस्य मण्डूकप्लुत्या दधस्तथोश्च' इति सूत्रे अनुवृत्तिः स्वीकृता भाष्यकृता, झलामिति सूत्रे तत् सम्बन्धवारणार्थमन्तग्रहणमिति शेखरग्रन्थाभिप्रायात् ॥ ननु झलीत्यस्य सम्बन्धे 'होढः' इत्यादाविवात्रापि 'पदस्य' 'स्कोः…'इत्यतः पदस्य, अन्त इति चानुवर्त्य पदान्ते विद्यमानानां झलां झलि जश्त्वविधानात्, खरि 'खरि च' इति सूत्रेण चर्त्वविधानाच्च कुत्रापि न दोषः पुनरप्यन्तग्रहणं व्यर्थम्। न च झलीति सम्बन्धे सर्वत्रानेनैव जश्त्वे सिद्धे 'झलां जश् झशि' इत्यस्य वैयर्थ्यमिति वाच्यम् सुद्ध्युपास्य इत्यादौ झलो द्वित्वस्य 'झलां जशोऽन्ते' इत्येतद्दृष्ट्या असिद्धत्वेन झल् परत्वाभावाज्जश्त्वासिद्धेः झलांजश्झशीति प्रदेशे पाठे तु प्राङ्क्षष्ठ इत्यादौ जश्त्वापत्तिः सिद्धान्ते तु कुक्टुकोरसिद्धत्वान्न जश्त्वामिति। न च झलीति सम्बन्धे वत्स्यति, वक्ष्यतीत्यादौ जश्त्वापत्तिरिति वाच्यम् खरि चेति चर्त्वेन दोषाभावादिति

* 'झलोझलि' इत्यतो झलीति।

चेन्न झलीति सम्बन्धे पक्त्रमित्यादौ जश्त्वापत्तेः। खर्परत्वाभावेन खरि चेत्यस्य न प्रवृत्तिः. 'खरि च' इत्यपेक्षया 'पचो वः' इत्यस्य पूर्वत्वात् नासिद्धत्वमिति। किञ्च झलीति सम्बन्धे स्रस्तम्, ध्वस्तमित्यादौ जश्त्वं स्यादिति सुधियो विभावयन्तु ॥ ४१ ॥

## उत्तरपदत्वे चापदादिविधौ प्रतिषेधः।

परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वढत्वादिव्यावृत्यर्थमवश्यं स्वीकर्तव्यत्वेन—उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेध इत्यनेनैव परमदण्डिनावित्यादौ "ङमो ह्रस्वादचि..." इति ङमुडादिवारणं सम्भवति तदर्थम् 'ञि च पदे' इत्यतः मण्डूकप्लुत्या पद इत्यनुवृत्तिकरणं प्राचोक्तं विफलमेव, तत्रोत्तरेति लुप्तषष्ठीकं पृथक् पदम्, उत्तरशब्दस्योत्तरपदे लक्षणा, उत्तरपदशब्दश्च समासचरमावयवे रूढः, पदत्व इत्यस्य पदत्वप्रयुक्ते कार्य्ये इत्यर्थः तथा च—पदादिविधिभिन्ने पदत्वप्रयुक्ते कार्य्ये कर्त्तव्ये उत्तरपदस्य प्रत्ययलक्षणं नेति वार्तिकार्थ इति **मनोरमाकाराः**।

**नव्यास्तु**—वार्तिके कार्य्यित्वनिवेशात् उत्तरपदस्य कार्य्यित्व एव निषेधप्रवृत्त्या उत्तरपदस्य पदादिविधिभिन्ने पदत्वप्रयुक्ते कार्य्ये कर्त्तव्ये प्रत्यासत्त्या उत्तरपदस्य प्रत्ययलक्षणं नेत्यर्थः, [1]अतएव माषकुम्भवापेनेत्यत्र कुम्भेत्युत्तरपदस्य कार्य्यित्वाभावेन निषेधाप्रवृत्त्या 'पदव्यवायेऽपि' इति निषेधाण्णत्त्व न भवतीति एवञ्च परमदण्डिनावित्यादौ दाण्डिनित्युत्तरपदस्य कार्य्यित्वाभावेन निषेधाप्रवृत्त्या ङमुडादिवारणार्थम् 'ञि च पदे' इत्यतः मण्डूकप्लुत्या पद इत्यस्यानुवृत्तिरावश्यिका।

न च पूर्वदण्डप्रिय इत्यादौ नलोपार्थम्—उत्तरपदेन मध्यमपदस्वानाक्रान्तोत्तरपदस्य ग्रहणं भवतीति तथा च पूर्वदण्डप्रिय इत्यादाविव माषकुम्भवापेनेत्यत्रापि कुम्भेत्यस्य मध्यमपदत्वात् "उत्तरपदत्वे च" इति निषेधाप्रवृत्त्या प्रत्ययलक्षणेन पदत्वात् 'पदव्यवायेऽपि' इति णत्वं नेति तदर्थं कार्य्यित्वनिवेशो विफल इति वाच्यम्

१—वार्त्तिके कार्य्यित्वनिवेशादेव।

[1]अत्र मध्यमपदत्वम्—यद्वृत्यारम्भकसुबुनिमित्तिकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वमिति परिष्कारेणादोषात् तथा हि—माषकुम्भवापेनेत्यादौ वृत्तिद्वयम् तत्र कुम्भपदे माष आम् कुम्भ सु इत्येतद्वृत्तिघटकाव्यवहितपूर्वत्वस्याभावान्न पूर्वोक्तवृत्तिवैशिष्ट्यम्, माष कुम्भ अस् वाप इत्याकारवृत्तिवैशिष्ट्यस्य कुम्भपदे टिप्पणोक्तोभयसम्बन्धेन सत्त्वेऽपि न तद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षितेति अतः माषकुम्भवापेनेत्यत्र 'उत्तरपदत्वे…' इति निषेधाप्रवृत्तये प्रत्ययलक्षणेति पदत्वार्थं कार्यित्वनिवेश आवश्यक इत्याहुः[2] ॥

अत्रोच्यते—पूर्वदण्डिप्रिय इत्यादौ नलोपार्थम्—मध्यमपदत्वानाक्रान्तोत्तरपदस्य वक्तव्यतया 'पूर्वदण्डिप्रियः' इत्यत्रेव 'माषकुम्भवापेन इत्यत्रापि कुम्भेत्यस्य मध्यमपदत्वाक्रान्तत्वात् 'उत्तरपदत्वे च' इति निषेधाप्रवृत्त्या 'पदव्यवायेऽपि' णत्व नेति तदर्थं कार्यित्वनिवेशो व्यर्थ एव । न चैवम् 'परमलोम्निचरः' इत्यत्रापि मध्यमपदत्वाक्रान्तत्वेन मध्यमपदत्वानाक्रान्तोत्तरपदस्याभावान्निषेधाप्रवृत्तौ न लोपस्स्यादिति वाच्यम् स्वारम्भकसुबन्तावधिकपूर्वत्व—स्वारम्भकसुबन्तावधिकोत्तरत्व—स्वघटकत्वैतत्त्रितयसम्बन्धेन वृत्तिविशिष्टत्वरूपस्य मध्यमपदत्वस्य ग्राह्यतया प्रकृते मध्यमत्वानाक्रान्तोत्तरपदस्य सत्त्वेन दोषाभावात् । न चोक्तरीत्या 'माषकुम्भवापेन' इत्यत्र द्वितीयवृत्तिमादाय स्वारम्भकसुबन्तावधिकोत्तरत्वाभावेन मध्यमपदत्वाभावात् 'उत्तरपदत्वे चापददादिविधौ' इति निषेधेन 'पदव्यवायेऽपि' इत्यस्याप्रवृत्तौ णत्वं स्यादिति वाच्यम् स्वघटकावधिकपूर्वत्वाभावत्वमुत्तरपदत्वमिति परिष्कृतस्योत्तरपदत्वस्य स्वीकारेणादोषात् । न चैवमपि 'परमलोम्निचरः' इत्यत्र ङिपूर्वत्वासत्त्वेन वृत्तिघटकावधिकपूर्वत्वाभावाभावेन—उत्तरपदत्वाभावात् प्रत्ययलोपलक्षणेन पदत्वापत्तौ न लोपापत्तिरिति वाच्यम् स्वघटकनिष्ठोद्देश्यतानिरूपिताविधेयतानाश्रयावधिकपूर्वत्वाभावत्वस्य वि-

---

१—अत्र वै० स्वघटकार्थवदव्यवहितपूर्वत्वम्—स्वघटकार्थवदव्यवहितोत्तरत्वम् स्वघटकत्वमेतत्त्रितयसम्बन्धेन ।

२—पूर्वदण्डिप्रिय इत्यादौ तु दण्डिन्निति पूर्वोक्तपरिष्कृतमध्यमपदत्वाक्रान्तमेवेति न प्रत्ययलक्षणनिषेधः ।

वक्षणात्, 'पूर्वदरिडप्रिय.' इत्यत्र स्वघटकनिष्ठोद्देश्यतानिरूपितपरत्वावच्छिन्नविधेयतानाश्रयावधिकपूर्वत्वसत्त्वेनोत्तरपदत्वाभावान्न लोपसिद्धिः एवञ्च विधेयतापरत्वावच्छिन्ना विवक्षिता। यद्यपि—राज्ञीयतीत्यत्रोक्तरीत्या उत्तरपदत्वसत्त्वात् 'उत्तरपदत्वे च' इति-प्रत्ययलक्षणनिषेधात् 'नःक्ये' इति नियमार्थमिति ग्रन्थकृतां व्याख्यानमसङ्गतम् तथापि—सुबन्तत्वावच्छिन्ना या स्वघटकनिष्ठोद्देश्यता तादृशोद्देश्यतानिरूपितोक्तविधेयतानाश्रयावधिकपूर्वत्वाभाववत्त्वस्य सत्त्वेन प्रकृते न किञ्चिद्दूषणम्। न चैवमपि तिस्रः गावो भव्याः यस्येति विग्रहे 'त्रिगवभव्येन' इत्यत्रोत्तरपदत्वसत्त्वे 'पदव्यवायेऽपि' इति निषेधो न स्यात् तदसत्त्वे च 'एङः पदान्तादति' इति पूर्वरूपापत्तिरिति कार्य्यित्वनिवेश आवश्यक इति वाच्यम् 'पदव्यवायेऽपि' इत्यत्र पदपदं पदत्वयोग्योपलक्षकमिति स्वीकारेणादोषात्, अतएव 'अतद्धिते' इति वार्त्तिकं भगवता प्रत्याख्यातम् अन्यथा माषकुम्भेन, माषकुम्भवापेनेत्यादौ फलभेदात् तदसङ्गतिस्स्पष्टैव स्यात् एवञ्च कार्य्यित्वनिवेशे न किञ्चित् फलमिति बोध्यम्।

यत्तु—'ङमुट्' सूत्रस्थलघुशब्देन्दुशेखरस्य टिप्पणे 'अटतीत्यट् परमश्चासावट् च परमाट् तस्मादाचारक्विबन्तात् क्विपि 'तितुत्र' इतीडभावे परमाट्तिरित्यादौ ष्टुत्वनिषेधाय कार्य्यित्वनिवेश आवश्यक' इति लिखितं तत्तु—'ह्रस्वनद्यापो नुट्' इति सूत्रभाष्यपर्य्यालोचनया हलन्तेभ्यः आचारक्विपोऽनभिधानमित्यनेन विरुद्धं प्रतिभातीति विचारयन्तु विद्वांस इति दिक्॥ ४२॥

## मय उञो वो वा।

ननु 'इको यणची'त्यस्यानन्तरम् 'मय उञो वा' इति पाठे तत्र यणोऽनुवर्त्तनेन, किञ्च 'ङमो ह्रस्वादचि·····'इत्यस्याग्रे 'इको यण् मय उञो वा' इति पाठेन किम्वुक्तम् तदभावे 'निपात एकाजनाङ्' इति प्रकृतिभावे किमु-उक्तमित्यादीनां सिद्धौ इको यणचीति सूत्रे अचिग्रहणं मय इति सूत्रे वकारग्रहणञ्च न कार्य्यमिति महल्लाघवमनादृत्य त्रिपाद्यां पाठस्य 'मय उञो वो वा' इति सूत्रस्य फलं दर्शयितुमाह—वत्वस्यासिद्धत्वान्नानुस्वार इति। अयं भावः—अष्टा-

ध्यायीपाठभेदे किम्वुक्तमित्यत्र 'मोऽनुस्वारः' इत्यनेन मकारस्यानुस्वारस्स्यात्, त्रिपाद्यां पाठे तु—अनुस्वारदृष्ट्या वत्वस्यासिद्धत्वेन हल्परत्वाभावान्नानुस्वार इति। केचित्तु—सन्निपातपरिभाषयैव तत्रानुस्वारवारणं सिद्धं त्रिपाद्यां पाठस्य प्रत्यङ्ङ् धकरोदित्यादौ वत्वस्यासिद्धत्वादुकाररूपेऽचि परे ङमुट्सिद्धिरूपं फलं वदन्ति ॥ ४३ ॥

## हेतौ।

ननु करणतृतीययैव सिद्धे 'हेतौ' इदं सूत्रं व्यर्थमतो हेतुकरणयोर्वैषम्यं दर्शयितुमाह—द्रव्यादि……इति, अत्रादिशब्देन गुणक्रिये ग्राह्ये। अयं भावः—द्रव्यगुणक्रियाणां जनको हेतुर्भवति, करणन्तु क्रियामात्रजनकमेव किञ्च निर्व्यापारस्य सव्यापारस्य च जनको हेतुर्भवति, करणन्तु सव्यापारस्यैवेत्यतो 'दण्डेन घटः' इत्यत्र दण्डस्य सव्यापारत्वेपि दण्डनिष्ठजनकतानिरूपिताजन्यताश्रयो घट इति बोधाभ्युपगमे दण्डस्य जनकतया घट एवान्वयस्वीकारात् क्रियाजनकत्वाभावात् करणत्वानापत्तौ तृतीयानापत्तिस्स्यात्, 'पुण्येन दृष्टो हरिः' इत्यत्र पुण्यस्य दर्शनक्रियाजनकत्वेऽपि निर्व्यापारत्वात् करणत्वानापत्तौ तृतीयानापत्तिस्स्यादतः 'हेतौ' इति सूत्रं कर्त्तव्यमेव। मूले द्रव्यविषये हेतुत्वस्योदाहरणम्—दण्डेन घट इति, क्रियाविषये हेतुत्वस्योदाहरणम्—पुण्येन दृष्ट इति। न च निर्व्यापारसव्यापारोभयस्य हेतुत्वे वाणेनेत्यत्र सव्यापारस्यापि वाणस्य हेतुत्वात् तृतीयासिद्धौ करणग्रहणं व्यर्थमिति वाच्यम् वाणेनेत्यत्र हेतुतृतीयायां वाणस्यैव जनकत्वे फलेऽन्वयस्स्यात् तथा च वाणजन्यप्राणवियोगाश्रयो वालीति वोधस्स्यात्, करणतृतीयायान्तु करणसंज्ञासूत्रे तमप्ग्रहणात् तमवर्थश्च प्रकर्षः स चाव्यवधानेन फलजनकव्यापारवत्त्वेति सर्वैः स्वीकृतमिति करणतृतीयाया आश्रयव्यापारौ वाच्यौ तथा च वाणस्य व्यापारद्वाराजनकत्वात् वाणव्यापारजन्यप्राणवियोगाश्रयो वालीति वाक्यार्थ इति भेदादिति दिक् ॥ ४४ ॥

## प्रातिपदिकार्थलिङ्ग…………।

नन्वत्र लिङ्गग्रहणसामर्थ्यात् 'नियतोपस्थितिकः प्रातिपदिकार्थ' इति स्वीकारे सिंहो माणवकः, गौर्वाहीक इत्यादौ लक्षणास्थले सिंहा-

दिसदृशरूपार्थस्य शक्यार्थरूपप्रातिपदिकार्थेत्यनेनासङ्ग्रहात्—लक्ष्यार्थस्य माणवकादेर्नियतोपस्थितिकत्वाभावेन प्रथमा न स्यादिति चेन्न अन्वयानुपपत्तिपूर्विका लक्षणा सुबन्त एव भवतीति स्वीकारात्–शक्यार्थमादाय प्रथमाविभक्त्युत्पत्त्यनन्तरं पदान्तरसमभिव्याहारे अन्वयानुपपत्त्या स्वशक्यतावच्छेदकारोपात्मिका लक्षणा भवतीति भावः। माणवकादिसमभिव्याहारे सिंहादिपदादेः सिंहसदृश इत्याद्यर्थस्य माणवकादावारोप इति भावार्थः। न च नियतोपस्थितिक इति स्वीकारे 'नीलो घटः' 'वीरः पुरुष' इत्यादौ प्रातिपदिकार्थापेक्षया विशेष्यविशेषणभावस्याधिकस्य भानेन मात्रपदेन व्यवच्छेदात् प्रथमा न स्यादिति वाच्यम् विशेष्यविशेषणभावस्य वाक्यार्थत्वेन वहिरङ्गत्वात् प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः, अत्र पदसंस्कारपक्षस्यैवाश्रयणात्॥

**द्रोणो व्रीहिः**---अत्र परिमाणमात्रे प्रथमा, प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन सम्बन्धेन विशेषणम् प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणम् तथा च द्रोणरूपं यत् परिमाणं तत् परिच्छिन्नो व्रीहिरिति शाब्दबोधः। न चात्रोक्तप्रातिपदिकार्थत्वादेव प्रथमासिद्धिः किमर्थं परिमाणग्रहणमिति वाच्यम् अत्र प्रातिपदिकार्थमात्रे प्रथमासिद्धौ समानविभक्तिकनामार्थद्वयोरभेदातिरिक्तः सम्बन्धोऽनुपपन्न इति व्युत्पत्त्या 'द्रोणाभिन्नो व्रीहिः' इत्यनिष्टः शाब्दबोधस्स्यात्, सर्वसम्मतः द्रोणपरिमितो व्रीहिः (द्रोणरूपं यत् परिमाणं तत् परिच्छिन्नो व्रीहिः) इति मूलोक्तशाब्दबोधो न स्यात् तथा च मूलोक्तशाब्दबोधलाभार्थं परिमाणग्रहणमिति स्वीकारात्, अतएव राजा पुरुष इति वाक्येन भेदसम्बन्धेन बोधो भवतीति। न च परिमाणमात्रे प्रथमायां द्रोणो व्रीहिमानयेत्यपि प्रयोगस्स्यादिति वाच्यम् प्रातिपदिकसाहचर्य्येण परिमाणमात्रे प्रथमाऽपि यत्र समानविभक्तिकनामान्तरार्थेऽन्वयविवक्षा तत्रैव नान्यत्रेति स्वीकारात्। न च 'राहोः शिरः' इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनपरभाष्यप्रामाण्येन 'अभेदस्य संसर्गत्वं न, तस्य संसर्गत्वे नीलो घट इत्यादौ षष्ठी च स्यात् तथा च कथं मूले—अभेदेन संसर्गेणेत्युक्तमिति वाच्यम् अभेदेनेत्यस्य इतरसम्बन्धानवच्छिन्नविशेष्यविशेषणभावेनेत्यर्थात्। सिंहो माणवक इतिवत् द्रोणशब्दस्य द्रोणपरिमिते लक्षणया द्रोणो

व्रीहिरित्यपि प्रातिपदिकार्थत्वादेव सिद्धं परिमाणग्रहणं प्रत्याख्यातमिति दिक् ॥ ४५ ॥

## कर्त्तुरीप्सिततमं कर्म ।

कर्त्तुरिति 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी, एतेन कर्तृकरणयोरिति सूत्रप्राप्ततृतीयाबाधिका कर्तृकर्म्मणोरिति षष्ठी तस्याः बाधकं न लोकेति सूत्रमिति कथं षष्ठीत्यपास्तम् न लोकेत्यस्यापवाद 'क्तस्य च वर्त्तमाने' इति सूत्रस्य जागरूकत्वात्। ईप्सितमिति-आप्नोतेस्सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति सूत्रेण वर्त्तमाने क्तः। न चेप्सधातोर्मत्याद्यर्थाभावात् कथं तत् सूत्रप्राप्तिरिति वाच्यम् 'मतिबुद्धि......' इति सूत्रे मतिशब्देनेच्छा गृह्यते पुनर्बुद्धिग्रहणात् अन्यथा मतिबुद्ध्योः पर्य्यायत्वादन्यतरवैयर्थ्यं स्यात्। न च पुनर्बुद्धिग्रहणात् सत्ताद्यर्थानां ग्रहणं कथं नेति वाच्यम् मतिग्रहणस्य भाष्ये इच्छाद्यर्थकधातूदाहरणप्रामाण्येनेच्छार्थककल्पनायाः न्याय्यत्वात्, अत्रैव कर्त्तुरिति सूत्रे षष्ठीदर्शनाच्च अन्यथा तव मते वर्तमानकालिकस्याभावेन भूतार्थकक्तस्य योगे षष्ठीनिषेधात् तन्निर्देशासङ्गतिस्स्यात्। न चास्तु मतिशब्देनेच्छामात्रार्थकधातुग्रहणमीप्सधातोः प्रकृत्यर्थस्याधिक्यात् इच्छामात्रार्थकत्वाभावेन तत्सूत्राप्राप्तिरिति वाच्यम् कर्त्तुरिति षष्ठीनिर्देशेनासति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायेनेच्छार्थकधातुग्रहणस्यैव ज्ञापनात् मात्रपदनिवेशे मानाभावात्। ईप्सितमित्यत्र क्तप्रत्ययोपात्तवर्तमानत्वन्तु न विवक्षितमत एव कटं कृतवान्, कटं करिष्यतीत्यादीनां सिद्धिः आप् धातोश्चात्र सम्बन्धरूपोऽर्थो गृह्यते न तु प्रापणानुकूलो व्यापारार्थः अत्र मानन्तु—'भुंजीयाहमोदनं यदि मृदुविशदस्स्यात्' इत्यादिभाष्यप्रयोग एव तथाहि—यदि प्रापणानुकूलो व्यापारः प्रकृत्यर्थस्स्यात्तदेप्सितमित्यस्य प्राप्तुमिष्यमाणमित्यर्थस्स्यात् तथा च कर्त्रा प्राप्तुमिष्यमाणं यत् तत् कर्म्मसंज्ञमिति सूत्रार्थापत्तौ ग्रामः प्राप्तुमिष्यमाणोऽस्तीत्यतः ग्रामं गच्छतीत्यादावेव कर्म्मसंज्ञा स्यान्न तु भुंजीयाहमोदनमित्यादौ तत्रोदनस्य प्राप्तुमिष्यमाणत्वाभावात्, सम्बन्धरूपार्थग्रहणे तु

ईप्सितमित्यस्य सम्बन्धुमिष्यमाणमित्यर्थे ग्रामं गच्छतीत्यादौ कर्त्रा संयोगरूपफलेन सम्बन्धुमिष्यमाणो ग्रामो भवतीत्यत्र यथा ग्रामस्य कर्म्मत्वं सिद्धं तथैव भुंजीयाहमोदनमित्यत्र कर्त्रा भोजनरूपफलेन सम्बन्धुमिष्यमाण ओदनोऽस्तीत्योदनस्य कर्म्मत्वं सिद्धमिति। अतिशयेनेप्सितमिति विग्रहे 'अतिशायने तमबिष्ठनौ' इति ईप्सितशब्दात् तमप्प्रत्ययः। अत्र 'कारके' इत्यस्याधिकारः 'कारके' इति सौत्री सप्तमी प्रथमार्थे, कारक इति संज्ञानिर्देश इति भाष्यम् तथा च कर्त्रा सम्बन्धुमिष्यमाणतमं कारकसंज्ञं सत् कर्म्मसंज्ञं स्यादिति सूत्रार्थः तत्र सम्बन्धस्य द्विष्ठत्वात् सम्बन्धुमिष्यमाणमित्यत्र केन सम्बन्धुमिष्यमाणमिति कारणाकांक्षायां यदि व्याप्तिन्यायेन येन केनापि सम्बन्धुमिष्यमाणं स्वीक्रियते तर्हि संयोगेन सम्बन्धुमिष्यमाणो ग्राम इति ग्रामं गच्छतीतिवत् धनेन सम्बन्धुमिष्यमाणः पुत्रोऽस्तीति पुत्रस्य धनमिच्छतीत्यादौ पुत्रस्यापि कर्म्मत्त्वापत्तिस्स्यात्, पशुना रुद्रं यजत इत्यादौ 'कर्म्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' इति वार्तिकञ्च व्यर्थं स्यात् तस्मादत्र प्रत्यासत्त्या व्यापारेण सम्बन्धुमिष्यमाणमित्यर्थः व्यापारः कथं प्रत्यासन्न इति चेत् सूत्रे कर्तृपदं वर्तते ततः व्यापारेत्यस्य लाभात् 'स्वतन्त्रःकर्त्ता' इत्यनुशासनेन तदर्थधातूपात्तव्यापाराश्रयः कर्त्ता भवतीति स्वीकारात् स्वातन्त्र्यञ्च-धातूपात्तव्यापाराश्रयत्वमित्यर्थात्। तथा च कर्त्रा व्यापारेण सम्बन्धुमिष्यमाणतमं कारकसंज्ञं सत् कर्म्मसंज्ञं स्यादित्यर्थः। न च व्यापारेण सम्बन्धुमिष्यमाणमित्यर्थे कर्त्तुरेव कर्म्मत्त्वापत्तिरिति वाच्यम् व्यापाराश्रयः कर्त्तेति लक्षणात्। यदि व्यापारेण कर्त्तुरेव सम्बन्ध इति देवदत्तो ग्रामं गच्छतीत्यादावुच्यते तर्हि तदुदाहरणासङ्गतिस्स्यात् व्यापारेण सम्बन्धश्च स्वजन्यफलद्वारा ग्राह्यः तथा च कर्त्रा स्वनिष्ठव्यापारजन्यफलेन सम्बन्धुमिष्यमाणतमं कारकं सत् कर्मसंज्ञं स्यादिति सूत्रार्थः सिद्धः लक्षणसमन्वयो हरिं भजतीत्यादौ प्रीत्यनुकूलो व्यापारो भजधात्वर्थ. तत्र प्रीतिः फलम् तदनुकूलो व्यापाराश्रयो देवदत्तः, कर्त्रा ( देवदत्तेन ) स्वनिष्ठव्यापारजन्यप्रीतिरूपेण फलेन सम्बन्धुमिष्यमाणतमो हरिरस्तीति हरेः कर्म्मत्वसिद्धिः। एतत् फलितार्थ एव 'फलाश्रयः कर्म्म' इति वादः। व्यापारस्य स्वजन्यद्वारकसम्बन्धग्रहणे एतत् सूत्रम्, भुंजीयाहमोदनमिति भाष्यप्रयोगश्च प्रमाणं बोध्यम्। न च कर्त्रा स्वनिष्ठव्यापारजन्यफ-

लेन ........इत्यर्थे गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिः तदनुकूलश्च गोपवृत्तिरिति कर्तृनिष्ठव्यापारजन्यत्वाभावेन पयसः कर्मत्वं न स्यादिति वाच्यम् जन्यस्थाने 'प्रयोज्य' निवेशेनादोषात्। तथा च—कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणतमं कारकं सत् कर्मसंज्ञं स्यादिति सूत्रार्थः। वृत्तित्वं षष्ठ्यर्थः कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेति भावः। ननु सूत्रे कर्त्तुरिति कर्तरि षष्ठी तथा च कर्त्तुरित्यत्र कर्तृशब्दात् व्यापारविशिष्टोऽर्थो बुध्यते ङस्‌शब्दादपि व्यापारविशिष्टोऽर्थो बुध्यते एवञ्च घटो घट इतिवत् शाब्दबोधो न स्यात्। न च कर्तृपदार्थस्य ङस्पदार्थैकदेशे वृत्तित्वेऽन्वय इति वाच्यम् तद्धर्मविशिष्टस्य तद्धर्मे आधेयतयाऽन्वयस्याव्युत्पन्नत्वात्[1]। अतएव ग्रामं गच्छतीतिवत् कर्म गच्छतीति प्रयोगो नेति चेन्न कर्तृपदस्य स्वतन्त्रपरत्वेन विरूपोपस्थितिसत्त्वेनादोषात् शब्दोऽपि शाब्दबोधे भासत इति वैयाकरणसिद्धान्तात् कर्तृशब्दस्य ङस्‌शब्दस्य च शाब्दबोधविषयत्वेन कर्तृवाच्यव्यापारविशिष्टङस्‌वाच्यव्यापारविशिष्टेति विरूपोपस्थितिसत्त्वात्। हरिं भजतीत्यादि प्रयोगे समवायिधात्वकर्त्तुः प्रकृत्यर्थत्वेन, आभातिकर्त्तुः षष्ठ्यर्थत्वेन तयोर्भेदादिति समाधानाच्च।

ननु 'कर्त्तुराप्यतमं कर्म' इत्येव सूत्रमस्तु 'कर्त्तुरीप्सिततमम्' 'तथायुक्तञ्चानीप्सितम्' इति सूत्रद्वयं न कार्य्यम् कर्तृनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धाश्रयं कारकं कर्मसंज्ञं भवतीति सूत्रार्थः तथा च ग्रामं गच्छतीत्यादौ संयोगादिरूपफलेन सम्बन्धाश्रयस्य ग्रामादेः कर्मत्वसिद्धिरिति चेन्न। 'काशीं गच्छन् पथि मृतः' इत्यत्र काश्याः कर्मत्वार्थमीप्सिततममिति तथाऽनीप्सितसंग्रहार्थं तथा युक्तमिति सूत्रमिति स्वीकारात् न हि काश्याः संयोगरूपफलाश्रयत्वमस्ति। अत्र 'ईप्सिततमत्वम्'—'प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्' 'काशीं गच्छन् पथि मृत' इत्यत्र काश्याः संयोगरूपफलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वमत्त्वात् कर्मत्वं सिद्धं भवति। ताडनादिना पराधीनतया विषमत्ति, कशाभिर्हतः कारागारं गच्छतीत्यादौ विषादितादृशफलाश्रयत्वेनोद्देश्य-

[1]—प्रकृत्यर्थकर्त्तुः प्रत्ययार्थककर्त्तरि घटो घट इतिवत् कथमभेदान्वय इति भावः।

त्वमेवेति न दोषः । प्रयागात् काशीं गच्छतीत्यत्र प्रयागस्य कर्म्मत्ववारणाय लक्षणे प्रकृतधात्वर्थफलेति, न हि विभागः प्रकृतधात्वर्थः । न चैवं काशीं न गच्छतीत्यत्र काश्याःकथं कर्म्मत्वम् संयोगप्रकारेच्छाविषयत्वाभावादिति वाच्यम् नञ् समभिव्याहारे संयोगाभावानुकूलव्यापारस्यैव गम्यर्थत्वेन संयोगाभावरूपफलाश्रयत्वेन कर्म्मत्वसिद्धेरिति * ॥ ४६ ॥

## कर्त्तुःकिम्—माषेष्वश्वं बध्नाति ।

सूत्रे कर्तृपदाभावेऽपि कारकाधिकारात् कर्तृपदस्य लाभसम्भवेन कर्तृवृत्तिव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणतमं कर्म्मेत्यर्थे सर्वेष्टसिद्धिः सूत्रे कर्तृपदं व्यर्थमिति प्रश्नः । उत्तरयति—कर्तृपदाभावे कारकाधिकारात्—कर्म्मपदस्यापि लाभसम्भवेन—कर्म्मवृत्तिव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणतमं कर्म्मेत्यर्थे माषेष्वश्वं बध्नातीत्यत्राश्वरूपकर्म्मनिष्ठभक्षणानुकूलव्यापारप्रयोज्यभक्षण(गलाधःसंयोग) रूपफलेन सम्बन्धुमिष्यमाणतमत्वं माषाणामस्तीति कर्म्मत्वं स्यादतः कर्तृपदमुपात्तम् । तत्राश्वो बध्नातेःकर्म्म, न तु कर्त्ता = माषेषु प्रसक्तमश्वं माषनाशो माभूदित्यत्र बध्नातीत्यर्थः । न च भक्षणकर्तृत्वस्याश्वे सत्त्वात् भक्षणरूपफलाश्रयत्त्वेन माषाणां कर्म्मत्त्वं दुर्वारमिति कृतेऽपि कर्तृग्रहणेऽयं दोषस्तदवस्थ एवेति वाच्यम् कर्तृग्रहणसामर्थ्यात् प्रकृतधात्वर्थकर्तुर्ग्रहणेनात्राश्वस्य बध्नातेः कर्तृत्वाभावेनादोषात्—यद्धातुवाच्यफलाश्रयत्वेन नेष्टस्य कर्म्मत्वं चिकीर्षितं तद्धात्वर्थनिरूपित एव कर्त्ता गृह्यत इति भाव इत्याशयेनाह मूले—कर्त्तुःकिमित्यादीति दिक्[1] ॥ ४७ ॥

---

*—अत्रत्याधिकं व्याख्यानं तृतीयखण्डे द्रष्टव्यम् ।

१—यद्वा—कर्तृग्रहणाभावे कारकाधिकारात् क्रियाया लाभः, येन विनेति न्यायेन क्रियया कर्त्तुराक्षेप इति पूर्वोक्तार्थः सिद्धः सूत्रे कर्तृग्रहणं व्यर्थमिति प्रश्नः । क्रियया कर्त्तुराक्षेप इव कदाचित् कर्म्मपदस्याप्याक्षेपे कर्म्मनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धाश्रयं कर्म्मेत्यर्थे माषाणां कर्म्मत्व स्यादित्युत्तरम् ।

# तमब्ग्रहणं किम्—पयसा ओदनं भुङ्क्ते।

केवलतमपः फलम् 'अग्नेर्माणवकं वारयतीति' इत्यादौ माणवकस्य कर्म्मसंज्ञारूपम्, अन्यथा 'वारणार्थानाम्' इति सूत्रस्या*पवादत्वात् माणवकस्यापादानत्वम् स्यादतो मूले 'पयसा ओदनं भुङ्क्ते' इति प्रत्युदाहरणात् ज्ञायतेऽत्र केवलतमपः फलं न पृच्छति किन्तु—तमप् ग्रहणं यत्रेति बहुव्रीहिणा ईप्सिततममिति समुदायस्य फलं पृच्छति— 'कर्त्तुरुद्देश्यं कर्म्म' इत्येव सूत्रं कार्य्यम् 'ईप्सिततमम्' ग्रहणं न कार्य्यमिति प्रश्नकर्त्तुराशय इति भावः। उत्तरयति—'कर्त्तुरुद्देश्यं कर्म्म' इति सूत्रकरणे कृतभोजनोऽपि पयो लाभेनौदनभोजने प्रवर्तत इत्यर्थके 'पयसा ओदनं भुङ्क्ते' इति वाक्ये भोजनक्रियायाः पयस उद्देश्यत्वात् पयसः कर्म्मसंज्ञा स्यात्। ईप्सिततमग्रहणे कृते तु-कृतभोजनस्यापि पुरुषस्यौदन एव ईप्सिततमः, पयस्तु संस्कारकत्वात् करणमस्योद्देश्यत्वेऽपि नेप्सिततमत्वविवक्षा न हि केवलपयसः पानेन संतुष्यति किन्तु तत्संस्कृतेनौदनेनातो न पयसः † कर्म्मत्वमिति मूलग्रन्थाभिप्रायः॥ ४८॥

# कर्तुरीप्सिततमं कर्म्म।

अत्र 'अधिशीङ्स्थासां कर्म' इति सूत्रात् कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्, अन्यथा गेहं प्रविशतीत्यत्रैव कर्मसंज्ञा स्यात् हरिं भजतीत्यादौ न स्यात्। न चैवं 'कर्मणि हनः' इति सूत्रम्, सन् विधायकमित्यादि सूत्रञ्च व्यर्थीभूय ज्ञापयति-अत्राधारग्रहणस्य नानुवृत्तिरिति वाच्यम् कर्मणि हन इति सूत्रं पितृव्यमारुह्य हतवानित्यर्थके पितृव्यघातीत्यत्र चारितार्थ्यात् सन्विधायकसूत्रन्तु आत्म-

* न चाग्नौ तच्चारितार्थ्यमिति वाच्यम् तस्यापि संयोगरूपफलाश्रयत्वेनेप्सितत्त्वात्। तथा च—तमबभावे माणवकस्याग्नेश्चेप्सितत्वेन वारणार्थानामित्यस्यापवादत्त्वादुभयत्रापादानसंज्ञा स्यात्। कृते तमपि तु—'अग्नेर्माणवकमित्यादौ माणवकस्येप्सिततमत्वविवक्षया कर्म्मसंज्ञा अग्नेरीप्सितमात्रविवक्षयाऽपादानसंज्ञा' इति व्यवस्थासिद्ध्यर्थं केवलतमप आवश्यकता।

† यदा तु पयोऽपि ईप्सिततमम् तस्य भवति तदा 'पयो भुङ्क्ते' इति पयसः कर्म्मत्वमिष्यत एव।

नि विषयतासम्बन्धेन बोधस्य सत्त्वात् आत्मानं बुभुत्सतीत्यत्र चारितार्थ्यमिति स्वीकारादित्याशयेनाह मूले—"कर्मेत्यनुवृत्तौ........." इति ॥ ४९ ॥

## अपिः पदार्थ......... ।

पदार्थद्योतकोऽपिः कर्मप्रवचनीयसंज्ञस्स्यात् = अप्रयुज्यमानं यत् पदं तदर्थद्योतक इत्यर्थ इति भावः, सर्पिषोऽपि स्यादित्यत्राप्रयुज्यमानम्पदम्बिंदुरिति तदर्थद्योतकत्वादपेः कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधादुपसर्गप्रादुर्भावामिति षत्वन्न। नन्वपिशब्दयोगः शब्दतोऽर्थतो वा, शब्दतो योगाश्रयणे सर्पिश्शब्देऽपि योगात्तस्माद्द्वितीया स्यात्, अर्थतो योगाश्रयणे अपेः पदार्थद्योतकत्वाद्बिन्दुशब्दार्थेऽन्वयात् क्रियान्वयाभावादुपसर्गत्वाप्राप्त्या कर्मप्रवचनीयसंज्ञा निष्फलैवेति चेन्न बिन्दुर्दौर्लभ्यप्रयुक्तसत्तादौर्लभ्यद्योतकत्वाद्बिन्दुशब्दार्थान्वयद्वारा क्रियाऽन्वयित्वात्। सर्पिश्शब्दार्थेऽवयवत्वेन बिन्दुशब्दार्थान्वयेऽपि न तद्द्वारा सर्पिश्शब्दार्थेऽपि पदार्थान्वयः, स्वान्वितद्वारा स्वान्वितविशेष्ये एवान्वयो भवति न तद्विशेषणे, बिन्दुशब्दात्तूपपदविभक्तेरिति न्यायात् प्रथमैव भवति बिन्दुशब्दार्थद्योतकत्वन्त्वपिशब्दस्य तत्कर्तृकसत्तादौर्लभ्यद्योतनद्वारेति मूलार्थ इति दिक् ॥ ५० ॥

## गतिबुद्धि......... ।

ननु देवदत्तो ग्रामं गच्छतीतिवत् ग्रामं गमयति देवदत्तं यज्ञदत्त इत्यादौ प्रयोज्यकर्तृनिष्ठणिजर्थव्यापारप्रयोज्यफलाश्रयाणां देवदत्तादीनामपि कर्तुरिति सूत्रेणैव कर्म्मत्वं सिद्धं 'गतिबुद्धि...' इति सूत्रं व्यर्थं सत् ज्ञापयति—णिजर्थव्यापारप्रयोज्यफलाश्रयाणां कर्मत्वं यदि स्यात्तर्हि गत्यर्थादिप्रकृतिकानामेव नान्यप्रकृतिकानामिति नियमात् तण्डुलान् पाचयति देवदत्तेन यज्ञदत्तस्य कर्मत्वं नेत्याशयेनाह—गतीत्यादि किमीति।

न चैतावतापि स्वांशे चारितार्थ्यं नायातीति वाच्यम् णिजर्थव्यापारप्रयोज्यफलाश्रयातिरिक्तस्यैव कर्म्मसंज्ञा भवतीति कर्तुरिति

सूत्रे संकोचेनादोषात् । न च गतिबुद्धीति सूत्रं नियमस्य सजातीयापेक्षत्वेन---सकर्मकधातुप्रकृतिकणिजर्थव्यापारप्रयोज्य-फलाश्रयाणां यदि कर्म्मत्वं स्यात्तर्हि गत्याद्यर्थकानामेवेति नियमार्थम्—अर्थात्—सकर्मकधातूनां—विषये एव नियमार्थं भवति, तथा च भावयति देवदत्तं यज्ञदत्त इत्यादौ कर्त्तुरिति सूत्रेण कर्मकत्वात् कर्म्मत्वं सिद्धं गतीति सूत्रेऽकर्मकग्रहणं व्यर्थमिति वाच्यम् अकर्मकग्रहणं व्यर्थं सत् ज्ञापयति—येषां देशकालादिभिन्नं कर्म्म न भवति तेषामेवात्र ग्रहणमिति स्वीकारात् । तेन मासमासयति देवदत्तं यज्ञदत्त इत्यादौ सकर्म्मकत्वेऽपि गतीति सूत्रेण, कर्म्मसंज्ञा भवतीति, तण्डुलादिकर्म्मणोऽविवक्षया देवदत्तेन पाचयतीत्यादावकर्म्मकत्वेऽपि गतीतिसूत्रेण देवदत्तस्य कर्म्मत्वं न भवतीत्याशयेनाह-कौमुद्याम्-येषां देशकालादिभिन्नम्......' इति । अतः न विद्यते कर्म येषान्तेऽकर्म्मका इति, अकर्म्मकपदस्यात्र नार्थः, किन्तु अकर्म्मकग्रहणसामर्थ्यात् पूर्वोक्तार्थवाचकमत्राकर्म्मकग्रहणमिति । न चोक्तज्ञापनेऽपि स्वांशेऽकर्मकग्रहणस्य चारितार्थ्याभाव इति वाच्यम् सूत्रेऽकर्मकग्रहणं सामान्यतो णिजर्थव्यापारप्रयोज्यफलाश्रस्य कर्म्मेति नियमार्थम्, णिजर्थव्यापारप्रयोज्यफलाश्रयातिरिक्तस्यैव कर्म्मेति पूर्वसूत्रे संकोचेन च चारितार्थ्यमिति चादोषादिति दिक् ॥ ५१ ॥

ननु गतिबुद्धीति सूत्रे बुद्धिपदेन ज्ञानं गृह्यते तथा च चक्षुरादीन्द्रियजन्यज्ञानार्थकानां धातूनामपि बुद्धिपदेन ग्रहणात् 'दृशेश्च' इति व्यर्थं सत् ज्ञापयति—सूत्रे बुद्धिपदेन ज्ञानसामान्यानामेव ग्रहणं न तु तत्तदिन्द्रियजन्यज्ञानानामित्याशयेनाह— सूत्रे ज्ञानसामान्येति ॥५२॥

ननु शब्दायति देवदत्तेनेत्यादौ—

"धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्मिका क्रिया ॥",

इत्यभियुक्तव्यवहारेण शब्दरूपकर्म्मणो धात्वर्थकुक्षिप्रविष्टेनाकर्म्मकत्वात् गतीति सूत्रेण कर्म्मत्वं तद्वारणाय—"शब्दायतेर्न" इति वार्तिकमित्याशयेनाह-धात्वर्थसंगृहीतेति ॥ ५३ ॥

## साधकतमं करणम्।

ननु क्रियते अनेनेति करणमिति व्युत्पत्त्या कारकाधिकाराच्च* करणशब्देनैव साधकत्वे लब्धेऽधिकं साधकग्रहणमेव साधकतमार्थं भविष्यति सूत्रेऽतिरिच्यमानं तमब्ग्रहणं व्यर्थमिति प्रश्नः। उत्तरयति—इदमेव तमब्ग्रहणं व्यर्थं सत् ज्ञापयति–अस्मिन् कारकप्रकरणे प्रकर्षार्थप्रत्ययं विना शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते इति तेन गंगायां घोष इति सिद्धम्, अन्यथा पूर्वोक्तरीत्या 'आधारोऽधिकरणम्' इत्यत्रापि अधिक्रियतेऽस्मिन्नित्यधिकरणमिति व्युत्पत्त्यैवाधारपदलाभे आधारग्रहणं व्यर्थं सत् सर्वावयवव्याप्त्या य आधारःसोऽधिकरणसंज्ञस्स्यादित्यर्थवोधनार्थं भविष्यति तथा चेदं सूत्रं तिलेषु तैलमित्यादावेव स्यान्न तु गंगायां घोष इत्यादावधिकरणसंज्ञा स्यात् न हि गंगापदं वा सर्वावयवैर्व्याप्तम् तमब्ग्रहणेन पूर्वोक्तार्थज्ञापने तु न किञ्चिद्दूषणमित्याशयेनाह—गंगायां घोष इति ॥ ५४ ॥

## रुच्यर्थानाम् ॥ ५५ ॥

रुचिरर्थो येषान्ते रुच्यर्थास्तेषाम्। हरये रोचते इत्यत्र 'कर्म्मसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञाविधानार्थं' सूत्रम्। हरये रोचते भक्तिरित्यस्य हरिं प्रीणयति भक्तिरित्यर्थः। ननु रुच्यभिलाषयोरेकार्थत्वादर्थग्रहणसामर्थ्यादपरामपि कर्मसंज्ञां बाधित्वा हरिर्भक्तिमभिलष्यतीत्यत्रापि सम्प्रदानसंज्ञा स्यादित्याशंक्यानयोर्भेदं दर्शयति—अन्यकर्तृक इति—अभिलष्यति कर्त्रपेक्षया यदन्यदभिलष्यति कर्म्म तत्कर्तृक इत्यर्थः। हरिर्भक्तिमभिलष्यतीत्यत्र भक्तिविषयक इच्छादिरूपो व्यापारोऽर्थः हरये रोचत इत्यत्र तु हरिनिष्ठप्रीत्यनुकूलव्यापारोऽर्थः इति तयोरर्थभेदान्नोक्तदोष इत्याह—हरिनिष्ठेति। न च प्रीधातोरपि रुच्यर्थत्वात् हरिं प्रीणयति भक्तिरित्यादावपि सम्प्रदानसंज्ञा स्यात्, सूत्रे प्रीयमाण इत्यत्र कर्म्मणि शानजनुपपन्नश्चेति वाच्यम् अनेनैव निर्देशेन प्रीधातूपात्तप्रीत्याश्रयस्य सम्प्रदानत्वाभावात्। अस्मिन् सूत्रे दीप्त्यर्थकस्य रुच्धातोर्न ग्रहणमत एवादित्यो रोचते दिक्षु इत्यत्र न सम्प्रदानसंज्ञेति दिक्॥

---

१—इह कारकाधिकारात् कारकमिति वर्तते साधकं कारकं हि पर्य्यायः तथा चोभयापादानेनैव तमपः लाभः सूत्रे तमब्ग्रहणं व्यर्थमिति प्रश्नः।

# कर्तृकर्म्मणोः कृति ।

नन्विह कर्त्तृकर्म्मपदाभ्यामन्यथानुपपत्त्या क्रिया आक्षिप्यते तद्वाचकश्च धातुरेव धातुभ्यश्च तिङ्कृतोरेव विधानं भवति तत्र तिङ् योगे कटं करोतीत्यादौ 'न लोका' इति प्रतिषेधेन भाव्यम् ततश्च परिशेषात् कृत्योगे एव षष्ठी भविष्यति सूत्रेऽधिकं कृद्ग्रहणं व्यर्थमित्याशयेनाशंक्य समाधत्ते—पूर्वोक्तरीत्या कृदित्यस्य लाभे सूत्रे कृद्ग्रहणं व्यर्थं सत् ज्ञापयति—कृदन्तमात्रनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयीभूतक्रियानिरूपितकर्तृकर्म्मणोः षष्ठी यथा स्यात्, तद्धितान्तनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयीभूतक्रियानिरूपितकर्त्तरि कर्म्मणि च षष्ठी मा भूदिति तेन कृधातोः कर्म्मणोऽविवक्षया अकर्मकत्वात् भावे क्तप्रत्यये* कृतं पूर्वमनेनेति विग्रहे सुप्सुपेति समासे 'पूर्वादिनिः सपूर्वाच्च' इति इनिः ततः कर्मयोगविवक्षया कृतपूर्वीकटमित्यत्र तद्धितान्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मणः सत्त्वेन कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्म्मणोऽभावान्न षष्ठ्याः प्रवृत्तिरित्याह—कृतपूर्वीकटमिति । अत्र कटस्यानभिहितं कर्म्मत्वमस्त्येवेति षष्ठी प्राप्ता सा तद्धिते माभूदित्येतदर्थं सूत्रे कृद्ग्रहणमिति भावः । न चात्र निष्ठान्तत्वेनैव, न लोकेति षष्ठीनिषेधात् सूत्रे कृद्ग्रहणं व्यर्थमिति वाच्यम् निष्ठान्तशक्तिज्ञानसहकारेणोपस्थितक्रियान्वयिनो कर्तृकर्म्मणोरेव न लोकेति निषेधात् । न च कृद्ग्रहणेन पूर्वोक्तज्ञापने तण्डुलानां पाचकतर इत्यत्र षष्ठी न स्यादिति वाच्यम् तत्र पाचकादेः पृथक्प्रयोगेण तद्योग एव षष्ठीति स्वीकारादित्येतत् सर्वं विस्तरेणात्रस्थशेखरे स्पष्टम् तत्रैव द्रष्टव्यम् ॥ ५८ ॥

# पुगन्तलघूपधस्य च ।

पुक् अन्तो यस्य तत् पुगन्तम्, लघ्वी उपधा यस्य तल्लघूपधम्, पुगन्तश्च लघूपधश्चानयोः समाहारः पुगन्तलघूपधं तस्य पुगन्तलघू-

* न च पाचयति देवदत्तेनेत्यादीनां सिद्ध्यर्थं गतीति सूत्रे अविवक्षितकर्म्मणामकर्म्मकपदेनाग्रहणमिति मूल उक्तम् तत् कथं कृतपूर्वीकटमित्यत्र कर्मणोऽविवक्षया भावे क्तप्रत्ययो भवतीति वाच्यम् भाष्यकारमते अविवक्षितकर्म्मणामप्यकर्म्मकपदेन ग्रहणात् । तत्सूत्रस्थमूलन्तु प्राचीनमत इति गतीति सूत्रे परे त्वित्यादिना शेखरकृता सर्वं लिखितमिति द्रष्टव्यम् ॥

पधस्येति बहुव्रीहिगर्भो द्वन्द्वसमासः । अत्र सार्वधातुकार्द्धधातुकयो-रिति यदि चाङ्गस्य विशेषणं स्यात् तर्हि—सार्वधातुकार्द्धधातुकाव्यवहितपूर्वस्य पुगन्तलघूपधरूपाङ्गस्यावयवभूतो य इक् तस्य गुण इत्यर्थे भिनत्तीत्यादावपि गुणःस्यात्, यदि च—सार्वधातुकार्द्धधातुकमिको विशेषणं स्यात्तर्हि—सार्वधातुकार्द्धधातुकाव्यवहितपूर्वस्य पुगन्तलघूपधरूपाङ्गावयवस्येको गुण इत्यर्थे भिनत्तीत्यादीनां वारणोऽपि भेत्तेत्यादौ गुणो न स्यादित्याशयेनाह—येन नाव्यवधानमिति = येन ( वर्णेन ) नाव्यधानम् ( अवश्यमेव व्यवधानम् ) तेन ( वर्णेन ) व्यवहितेऽपि सूत्रस्य प्रवृत्तिर्भवति तथा च सूत्रारम्भसामर्थ्यादेकवर्णव्यवधानमेवाश्रीयत इत्यर्थः । अन्यथा—सार्वधातुकाद्र्धधातुकाव्यवहितलघूपधाङ्गावयवस्येकः सर्वत्रासम्भवेन सूत्रस्य वैयर्थ्यं स्पष्टमेव । "तेन भिनत्तीत्यादावनेकव्यवहितस्य" इति मूले—तेनेत्यस्य = सार्वधातुकादेरिग्विशेषणत्वेनेत्यर्थः ।

नव्यास्तु—पुकि अन्तः पुगन्तः, लघ्वी चासावुपधा च लघूपधा, पुगन्तश्च लघूपधा चानयोः समाहारः पुगन्तलघूपधं तस्य पुगन्तलघूपधस्येति समासः । प्रत्ययस्याङ्गाश उत्थिताकाङ्क्षत्वात् सार्वधातुकादिकमङ्गविशेषणम् तथा च—सार्वधातुकार्द्धधातुकाव्यवहितपूर्वस्याङ्गसंज्ञकस्यावयवभूतो यः पुगन्तलघूपधरूपेक् तस्य गुण इत्यर्थं भिनत्तीत्यादो लघूपधरूपेकोऽभावेन गुणस्य प्रवृत्तिरेव नास्ति, चेततीत्यादौ लघूपधरूपेकः सत्त्वेन गुणो भवति । यद्वा—सार्वधातुकाद्र्धधातुकाव्यवहितपूर्वस्याङ्गावयवभूतो यःपुगव्यवहितपूर्वोऽन्तस्तस्य, सार्वधातुकाद्र्धधातुकाव्यवहितपूर्वस्याङ्गावयवभूताया लघ्वी उपधा तस्याश्च गुण इत्यर्थे भिनत्तीत्यादौ लघ्वी उपधानकारस्याकारः तस्य ह्रस्वाकारे—गुणे जातेऽपि न विशेष इति एवञ्च पूर्वोक्तार्थे इक्पदस्य सम्बन्धमपि न कार्य्यमिति महल्लाघवम् । न च भेत्तेत्यादौ गुरुत्वात् इकारस्य लघूपधत्वाभावेन गुणो न स्यादिति वाच्यम् क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधत्वाश्रयस्य गुणो भवतीति स्वीकारादिति भाष्यतत्त्वविदामभिप्रायः, "येन नाव्यवधानम्" इत्याद्येतत्सूत्रस्थमूलन्तु प्राचीनानुसारेणेति बोध्यमित्याहुः ॥ ५७ ॥ *

* एतत् पर्य्यन्तं व्याख्यानं परीक्षोपयोगि । अतः परं शास्त्रार्थविषयकं व्याख्यानं पा० प्रदीपस्य प्रथमभागे प्रकाशितमपि संशोध्यात्र लिख्यते ।

# पुगन्तलघूपधस्य च ।

नन्वत्र लघुग्रहणं न कार्य्यम् 'पुगन्तोपधस्य च' इत्येव सूत्रं कार्य्यम् उपधाया इको गुण इत्यर्थेनैव चेतद्वोत्यादौ गुणसिद्धिः । न च तदभावे ईहते, ऊहत इत्यादौ गुणापत्तिस्स्यादिति वाच्यम् अत्र पुगन्तग्रहणसामर्थ्येन दीर्घान्तस्य चेत्तर्हि पुगन्तस्यैवेति नियमेन तत्र गुणवारणात् अन्यथा दीर्घोपधस्य गुणश्चेत्तर्हि अनेनैव क्नोपयतीत्यादावपि गुणसिद्धौ पुगन्तग्रहणस्य वैयर्थ्यं स्पष्टमेव । न च पुगन्तस्य चेत्तर्हि दीर्घोपधस्यैवेति विपरीतनियमेन अर्पयतीत्यादौ ह्रस्वोपधे गुणो न स्यादिति वाच्यम् 'अर्त्तिह्री' इति सूत्रे पुकःस्थाने पुट् एव वक्तव्यः णेः षष्ठ्यन्तत्वेन विपरिणामश्च कर्त्तव्यः तथा च एभ्यो णेः पुडागमे पुडागमविशिष्टस्य णेः 'यदागमाः' इति न्यायेनार्द्धधातुकत्वात् अर्पयतीत्यादौ 'सार्वधातुकार्द्धधातुकयो'रित्यनेनैव गुणसिद्धौ पुगन्तेति सूत्रे पुग्ग्रहणं व्यर्थं स्पष्टमेवेति स्वीकारात् । न चैवं क्नोपयतीत्यादौ वलादित्वेनेट् स्यादिति वाच्यम् 'अर्तिह्री' इति सूत्रे पुट्ग्रहणमपहाय 'श्पप्' इति न्यासः कर्त्तव्यः तथा च णिनिरूपिताव्यवहितपूर्वत्वविशिष्टेभ्यः अर्तिप्रभृतिभ्यः श्पप् स्यात् एवञ्च श्पपः शित्वेन सार्वधातुकत्वम् पित्त्वेन चाङित्वम् तेन क्नोपयतीत्यादौ न दोषः । न च श्पपि घ्रापयतीत्यादौ "पाघ्राध्मा" इति जिघ्रादेश इति वाच्यम् 'अर्त्तिह्री' इति सूत्रेण पप् विधानात् एवञ्च 'तिङ्शित् सार्वधातुकम्' इति सूत्रस्थाने 'तिङ्शित् पप् सार्वधातुकम्' इति न्यासे क्नोपयति, घ्रापयतीत्यादावपि जिघ्रादेशाभावश्च सिद्धः । न च ह्रयणं ह्रिय घञर्थे कविधानम्, ह्रियमाचरति ह्रियति ह्रियतीति आचारक्विबन्तात् कर्त्तरि क्विपि ह्री ततः आचष्टे णिचि 'अर्त्तिह्री' इति सूत्रेण पुगागमे ह्रीपयतीति भवति—अत्र जुगुप्सतीत्यादाविव धातोरविहितत्वात् पुकः आर्द्धधातुकत्वाभावेन सिद्धान्ते गुणो न भवति इदानीं पप्न्यासे पपः सार्वधातुकत्वेन सार्वधातुकार्द्धधातुकयोरिति गुणे ह्रेपयतीति स्यादिति वाच्यम् । अर्त्तीत्यादि साहचर्य्येणोपदेशिकस्वादिगणपठितस्यैव ह्रीधातोर्ग्रहणेनोक्तप्रयोगस्यैवाभावादिति चेन्न पुगागमे यदागमपरिभाषया पुग्विशिष्टस्य धातुत्वेन अपीप्यत, अतिष्ठिपदित्यादौ लोपः पिबतः' 'तिष्ठतेरित्' इत्यनेनोपधालोप इत्वञ्च

भवति, पुगागमाभावे पपि न्यासे कृते पपः विकरणत्वेन धातोरवयवत्वाभावेनोपधात्वाभावात् तत्रोपधालोपस्येत्वस्य चाप्रवृत्तेः। *

एतेन—'अर्त्तिह्री' इति सूत्रे 'पप्' इति न्यासे पपः सार्वधातुकत्वात् अर्पयतीत्यादौ सार्वधातुकेति गुणे पुगन्तेति सूत्रे पुक् ग्रहणं न कार्यमिति वदन्तः परास्ताः ॥ ५८ ॥

## कृसृभृवृ...... ।

ननु कृसृभृ एषामनुदात्तत्वात् 'एकाच उपदेशे' इति इण्निषेधः सिद्धः, 'ऊदृदन्तैः' इति कारिकया वृङ्वृञौ यद्यपि सेटौ तथापि वृङः थलेव नास्ति वृञस्तु 'बभूथा ततन्थ जगृम्भववर्थ' इति सूत्रेण छन्दसि ववर्थ इति निपातनात् लोके थल इटि ववरिथेतीष्टमेव वमादिषु 'श्र्युकः किति' इत्यनेनैवेण्निषेधः सिद्धः सूत्रे कृसृभृवृ ग्रहणं व्यर्थं सत् नियमार्थमित्याशयेनाह—क्रादीनाम...इति। नियमाकारं दर्शयति—प्रकृत्याश्रय......इति अयंभावः—नञ्शब्दप्रापितः, वाशब्दप्रापितः सर्वः इण्निषेधः लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति नियमाकारस्यार्थः अतएव—ऊदित्वप्रयुक्तस्याप्यभावांशस्य नियमेन वारणात् सिषेधिथेत्येकमेव रूपं भवति। न च 'नेड्वशि' इति प्रक्रमात् अनन्तरस्येति न्यायाच्च संनिहितस्यैव नञापादितस्याभावस्य नियम उचितः न तु विभाषावल्लभ्यस्यापि तेन सिषेधिथ सिषेद्धेत्याद्युभयं भवतीति वाच्यम् उपदेशेऽत्वत इति सूत्रभाष्ये "अत्र नित्यानिट् इत्यस्याभावे अञ्जूधातोः थलि ऋतो भरद्वाजस्येति विकल्पेट् † स्यात्" इत्युक्तम् यदि तु वाशब्दप्रापितस्येण्निषेधस्य नियमो न स्यात्तर्हि उपदेशेऽत्वत

---

* यत्तु—सप्तदशाधिकैकोनविंशतिशततमेशवीये वर्षे प्रकाशिते पङ्क्तिप्रधाने पुस्तके एतत्सूत्रस्थां येन नाव्यवधानमिति पंक्तिं विहाय एतत्सूत्रघटकलघुग्रहणस्य खण्डनं प्रकाशितम् तत् द्विसप्तत्यधिकैकोनविंशतिशततमे वैक्रमे संवत्सरे (१९१५ ई०) मुद्रितादस्मदीयपाणिनीयप्रदीपपुस्तकादक्षरशः संगृहीतमिति पङ्क्तिचन्द्रिकाकारेण महदनुचितं कृतम् राजनियमात्।

† उपदेशेऽत्वत इति सूत्रे अचस्तास्वदिति सूत्रादनिट इत्येतावन्मात्रानुवृत्तौ नित्यग्रहणस्यासम्बन्धे उपदेशेऽत्वानटि चेत्यर्थे अञ्जूधातोः तासावूदित्त्वादनिट्त्वमस्त्येव तथा च उपदेशेऽत्वत इति सूत्रबोध्यस्याभावस्य विषये भरद्वाजनियमेन पक्षे इटः सत्त्वेन विकल्पः स्यादिति भावः।

इति सूत्रे नित्यानिडित्यस्य सत्त्वेऽपि ऊदित्वप्रयुक्तविकल्पस्य तत्र सत्त्वेन तद्भाष्यसङ्गतिस्स्यात् विकल्पप्रापितस्याप्यभावांशस्य क्रादिनियमेन निवर्त्तकत्वात् अञ्जूधातोः थलि आनञ्जिथेत्येकमेव रूपमिति मते पूर्वभाष्यं न विरुद्धमतः नञ्प्रापितस्येव विकल्पप्रापितस्यापि क्रादिनियमो निवर्तको भवतीति स्वीकारादिति। अत्र 'कृते ग्रन्थे'इत्यादि निर्देशात् क्रादिभ्यः इण्निषेधश्चेत्तर्हि लिट्येवेति विपरीतनियमो न भवतीति अतोऽधिकं यत् किञ्चित् तत् मूल एव स्पष्टम् ॥ ५९ ॥

## ऋदुपधेभ्यः...... ।

ननु तिङन्ते ववृक इत्यादौ असंयोगाल्लिटीति शास्त्रं बाधित्वा परत्वाद् गुणस्स्यादत आह—ऋदुपधेभ्यः लिटः......कित्त्वम् इति वार्तिकम् । ईजतुः वर्तितेत्यादावुभयोस्सावकाशयोरेकस्मिन् लक्ष्ये युगपत् प्राप्तौ पूर्वविप्रतिषेध इति भावः। न चैवमपि सिषिधतुरित्यादौ परत्वाल्लघूपधगुणो दुर्वार इति वाच्यम्। कृताकृतप्रसङ्गित्वेन कित्त्वस्य नित्यत्वात्। न चोक्तयुक्त्यैव ववृक इत्यादावपि गुणनिषेधे सिद्धे वार्त्तिकं व्यर्थमिति वाच्यम् ववृक इत्यादौ गुणे कृते संयोगात् परत्वात् कित्त्वाभावेन नित्यत्वाभावादिति दिक् ॥ ६० ॥

## गवाक् ।

हलन्तनपुंसकस्य शेखरे गवागिति प्रतीकमुपादाय "सोर्लुका लुप्तत्वान्नुम् न" इत्युक्तं तदसङ्गतम्—नपुंसकेऽनपुंसकस्येति पर्य्युदासात् सर्वनामस्थानपरत्वाभावादेव नुमोऽप्राप्तेरिति केनचिदुक्तम् तन्न सिंहावलोकनन्यायेन गवागिति प्रतीकन्तु "गवाक् शब्दस्य रूपाणि".. इति श्लोकस्थगवागित्यस्य तत्र गवाक् चासौ शब्दश्च गवाच्छब्दस्सोयं गवाक् शब्दः पुल्लिगस्तत्र प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् प्राप्तस्य नुमः सुपो धात्विति सोर्लुका लुप्तत्वान्नुम् नेति शेखरसमाधानं सम्यगेवेति तद्ग्रन्थाभिप्रायात्। अथवा सुडनपुंकस्येत्यत्र विहितत्वं षष्ठ्यर्थः तथा च नपुंसकाद्विहितस्य सुटः सर्वनामसंज्ञा नेति तदर्थः

लुका त्वनुत्पत्तिरेवान्वाख्यायते लुक्स्थले क्लीबेऽपि सर्वनामस्थानत्वमस्त्येवेति श्लोकस्थातिरिक्तस्वतन्त्रगवाक्शब्दप्रतीकेऽपि न क्षतिरिति समाधानं वदन्तीति ॥ ६१ ॥

प्रतापगढ़ीय बी० एन्० मेहतासंस्कृतविद्यालयस्य
व्याकरणाध्यापकरामचन्द्रत्रिपाठिविरचिते
पाणिनीयप्रदीपे द्वितीयो भागः समाप्तः ।

नयनवसुनवेन्दौ वैक्रमे पूर्णिमायाम् पशुपतिकृपयोर्जे ह्यन्यभागात्मकोऽयम् ।
अगमदभिसमाप्तिं गमलग्नश्रमाद्यः स भवतु भवतुष्ट्यै पाणिनीयप्रदीपः ॥

इति

शुभम्भूयात् ।



विविध-पुस्तक-प्राप्तिस्थानम्—
मास्टर खेलाड़ी लाल ऐण्ड सन्स
संस्कृत बुकडिपो
कचौड़ी गली, बनारस सिटी ।

# ❀ विक्रेयपुस्तकानि ❀

| | | | |
|---|---|---|---|
| ( १ ) | अनुवादादर्शः— | ... ... | ॥) |
| ( २ ) | पाणिनीयप्रदीपः— | प्रथमो भागः ... | ॥=) |
| ( ३ ) | ,, — | द्वितीयो भागः ... | ॥=) |
| ( ४ ) | वाक्यपदीयः— | ब्रह्मकाण्डः ... ... | १।) |
| ( ५ ) | समासचक्रम्— | ... ... ... | -) |
| ( ६ ) | संस्कृतशिक्षायाः— | प्रथमो भागः ... | =)॥ |
| ( ७ ) | ,, — | द्वितीयो भागः ... | ≡) |
| ( ८ ) | ,, — | ... | ।-) |
| ( ९ ) | अमरकोषः— | ... | ॥) |
| ( १० ) | तर्कसंग्रहः— | ...सहितः ... | ।=) |
| ( ११ ) | रघुवंशम्— | ...म् ... | ।≡) |
| ( १२ ) | ,, — | ... | ।≡) |
| ( १३ ) | ,, — | ... | १।) |
| ( १४ ) | नागानन्दना... | ... | १।) |
| ( १५ ) | पञ्चतन्त्रम्— | हिन्दीटीकासहितम् ... | २) |
| ( १६ ) | संस्कृत-कवि-चर्चा— | ... ... ... | २) |
| ( १७ ) | मेघदूतम्— | मल्लिनाथकृतटीकासहितम् ... | ॥) |
| ( १८ ) | धराचक्रम्— | हिन्दीटीकासहितम् ... | =)॥ |
| ( १९ ) | षट्पञ्चाशिका— | संस्कृतहिन्दीटीकाद्वयसमन्वितम् ... | ।) |
| ( २० ) | जन्मकुण्डल्याः— | मुद्रितपत्राणि ... ... | =) |



पुस्तक-प्राप्ति-स्थानम्—

**मास्टर खेलाड़ीलाल ऐण्ड सन्स,**

संस्कृत-बुकडिपो

कचौड़ीगली, बनारस सिटी।